# ॥ अथ सटीका शिवगीता प्रारभ्यते ॥

॥ श्रीगणेशायनमः ॥ ॥ श्रीगुरुभ्योनमः ॥ श्रीसांबसदाशिवायनमोनमः ॥
लक्ष्मीनृसिंहचरणद्वयमादरेणनत्वाचतुर्विधपुमर्थनिदानभूतम् ॥ भट्टोजिदीक्षित
कृतिंकृतिभिर्विभाव्यामालोक्यबालमतयेवितनोमिटीकाम् ॥ १ ॥ अथेति ॥ नि
त्यानित्यवस्तुविवेकइहामुत्रार्थफलभोगविरागः शमादिषट्कं मुमुक्षुत्वंचेति साधन
संपन्नाएतेमांपृच्छंतीतिनिर्णयानंतरं यतएतेऽल्पश्रवणमात्रेणकृतार्थाभविष्यंत्ये

॥ श्रीगणेशायनमः ॥ सूतउवाच ॥ अथातःसंप्रवक्ष्यामिशुद्धं
कैवल्यमुक्तिदम् ॥ अनुग्रहान्महेशस्यभवदुःखस्यभेषजम् ॥१॥

वतथापिगुरुमुखादेतच्छास्त्रस्याध्येतारोऽन्येऽपिमुक्ताभविष्यंति। अतःकारणादि
दंवक्ष्यमाणंगीताशास्त्रार्थंयुष्मान्प्रतिवक्ष्यामि । एतच्छास्त्रस्यवक्तृत्वेश्रोतृत्वेमहे
श्वरानुग्रहएवकारणमित्याह ॥ अनुग्रहादिति ॥ तदुक्तम् । " ईश्वरानुग्रहादेवपुं
सामद्वैतवासना। महाभयकृतत्राणपराणामेवजायते" इति ॥ कीदृशंगीताशास्त्र

मित्यतआह ॥ भवेति ॥ भवःसंसारः सएवदुःखंरोगस्तस्यभेषजंनिवृत्तिसाधनमौषधं नकेवलमेतावदेवकिंतुशुद्धकैवल्यमुक्तिदम् । केवलस्यभावःकैवल्यंब्रह्म तदेवमुक्तिः शुद्धाचासौकैवल्यमुक्तिश्चसातथोक्ता तांददातितत्तथा । विशेषणद्वयेनशोकनिवृत्तिरानंदावाप्तिश्चप्रयोजनमस्यशास्त्रस्येतिसूचितम् । शुद्धकैवल्येत्यत्रशुद्धपदेनसारूप्यादिसातिशयमुक्तीनांनिरासःसूचितः । अनुग्रहान्महेश

नकर्मणामनुष्ठानैर्नदानैस्तपसापिवा ॥ कैवल्यंलभतेमर्त्यःकिंतुज्ञानेनकेवलम् ॥ २ ॥

स्येत्यनेनस्वस्यसूतत्वेऽपिमोक्षशास्त्रोपदेशेऽधिकारःसूचितः।यद्यपिभिषजःकर्मेतितद्धितेऽणि आदिवृद्ध्याभाव्यं तथापिकेवलमामकेतिसूत्रेनिपातनाद्गुणः तथाच निघंटुः। "भेषजौषधभैषज्यान्यगदोजायुरित्यपीति" ॥१॥ नकर्मणेति ॥ "नकर्मणानप्रजयाधनेनत्यागेनैकेअमृतत्वमानशुः । ज्ञानादेवतुकैवल्यम्" इतीममर्थं

मनसिनिधायाह । कर्मणांश्रौतस्मार्तादीनामनुष्ठानैर्मर्त्यःमरणधर्मादेवादिमनु ष्यांतःकश्चिदपिकैवल्यंमोक्षंनलभते ॥ दानैःकल्पोक्तैर्गोभूम्यादिवितरणैः । तप सापिवा कृच्छ्रचांद्रायणादिरूपेणनलभते । कर्मादीनांस्वर्गफलकत्वान्निष्कामतया नुष्ठितानांचित्तशुद्धिद्वाराविविदिषाफलकत्वात् । तर्हिमोक्षःकेनसाधनेनभवती त्याशंकायामाह ॥ किंत्विति ॥ इतरनिरपेक्षज्ञानेनैव "तमेवविदित्वातिमृत्यु

रामायदंडकारण्येपार्वतीपतिनापुरा ॥ याप्रो
क्ताशिवगीताख्यागुह्याद्गुह्यतमापिसा ॥ ३ ॥

मेति नान्यःपंथाअयनायविद्यते" इत्यादिश्रुतेः ॥ २ ॥ गुरूत्तमशिष्योत्तमसंवाद तयाप्रवृत्तमिदंगीताशास्त्रमुपनिषद्वाक्यमेवेतिप्रशंसन्नाह ॥ रामायेति ॥ सागी तामयायुष्मभ्यमुपदिश्यते । साकेत्याकांक्षायामाह । पुरापूर्वंदंडकारण्येपार्वती पतिनाशिवेनरामाययागीताप्रोक्तासा ॥ गुह्येति ॥ अतिरहस्यभूतापि । अपि

नागुरोर्वात्सल्यंसूचितम् । शिवपदेनाख्यापदेनचसर्वासांगीतानांमध्येअस्याः श्रेष्ठत्वंसूचितम् ॥ ३ ॥ तदेवश्रेष्ठत्वंसंप्रदायशुद्धिपूर्वकंसूचयितुंस्वगुरुपरंपरामाह ॥ यस्याइति ॥ यस्याःशिवगीतायाःस्मरणमात्रेणतदर्थध्यानमात्रेण । अस्यां शिवगीतायांशुद्धबुद्धमुक्तस्वरूपंब्रह्मैवाध्यारोपापवादाभ्यां प्रतिपादितमस्तीति

यस्याःस्मरणमात्रेणनृणांमुक्तिर्ध्रुवाहिसा ॥ पुरासनत्कुमा
रायस्कंदेनाभिहिताहिसा ॥ ४ ॥ सनत्कुमारःप्रोवाचव्यासा
यमुनिसत्तमाः ॥ मह्यंकृपातिरेकेणप्रददौबादरायणः ॥ ५ ॥

ध्यानमात्रेणेत्यर्थः । नृणामितिबहुवचनेनदेवादीनामपिसाप्रसिद्धा । ध्रुवानिर्बाधाब्रह्मस्वरूपभूतेत्यर्थः । हिनिश्चयेनमुक्तिर्भवतीतिशेषः । साशिवगीतासनत्कुमारायस्कंदेनपुराअभिहितोपदिष्टा । हिशब्देनसर्वगीताश्रेष्ठत्वंद्योतयति ॥४॥ ॥ सनत्कुमारइति ॥ हेमुनिपुसत्तमाःश्रेष्ठाइत्यनेनसंबोधनेनभवादृशाःसर्वेऽत्रा

धिकारिणइतिध्वनयति। बादरायणोव्यासःकृपातिरेकेणदयायाअतिशयेनमह्यं प्रददौ । मह्यमितिसंप्रदानचतुर्थ्या ब्रह्मविद्याप्रदानस्यसर्वदानोत्तमत्वंसूचितं कृपातिरेकेणेत्युक्त्यागुरुशुश्रूषयास्वस्मिन्गुरुप्रसादःसूचितः। "यस्यदेवेपरा भक्तिर्यथादेवेतथागुरौ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः" इतिश्रुतेः "त द्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया" इतिस्मृतेश्च ॥ ५ ॥ उक्तंचेति ॥ तेनप्रसि

उक्तंचतेनकस्मैचिन्नदातव्यमिदंत्वया ॥ सू
तपुत्रान्यथादेवाःक्षुभ्यंतिचशपंतिच ॥ ६ ॥

द्धेनमद्गुरुणागीतोपदेशानंतरमुक्तंच । किमुक्तंतदेवाह ॥ कस्मैचिदिति ॥ इदं शास्त्रं कस्मैचिदनधिकारिणे त्वयानदातव्यम् । अन्यथामद्वाक्यस्यापरिपा लनेनानधिकारिभ्योऽपिदानेक्रियमाणेदेवाइंद्रादयः क्षुभ्यंतिरुष्टाभवंति। शपंति चदातारंवक्तारमितिशेषः। तदुक्तंनिरुक्ते। "विद्याहवैब्राह्मणमाजगाम। गोपा

यमाशेवधिस्तेऽहमस्मि । असूयकायानृजवेऽयतायनमाब्रूयावीर्यवतीतथास्याम्" इति । "इदंतेनातपस्कायनाभक्तायकदाचन ॥ नचाशुश्रूषवेवाच्यंनचमांयोऽभ्यसूयति" इतिस्मृतेश्च ॥ ६ ॥ अथेति ॥ "उत्पत्तिंचविनाशंचभूतानामागतिंगतिम् ॥ वेत्तिविद्यामविद्यांचसवाच्योभगवानिति" इत्युक्तलक्षणोबादरायणो

अथपृष्टोमयाविप्रोभगवान्बादरायणः ॥ भगवन्देवताः
सर्वाःकिंक्षुभ्यंतिशपंतिच ॥ तासामत्रास्तिकाहानिर्ययाकु
प्यंतिदेवताः॥७॥ पाराशर्योऽथमामाहयत्पृष्टंशृणुवत्सल॥

मयापृष्टः । यत्पृष्टंतदाह ॥ भगवन्निति ॥ गुरुंप्रतीदमेवसंबोधनमितिसूचयति । "अधीहिभगवोब्रह्म" इत्यादिश्रुतेः । किंकिमर्थंक्षुभ्यंतिशपंतिच । तासांदेवतानाम् । यस्मैकस्मैचिद्दत्तायामित्यत्रशब्दस्यार्थः। काहानिरस्ति ययाहान्या ॥ ७ ॥ पाराशर्यइति ॥ अथममप्रश्नानंतरंपाराशर्योव्यासोमांप्रत्याह। हेवत्स

लदयालोस्त्वयंत्वंकृतार्थोऽपिलोकानुग्रहार्थंपृच्छसीतिसंबुद्ध्यासूचितम्। यत्त्वया पृष्टंतासामत्रास्तिकाहानिरिति। शृणुतस्योत्तरमितिशेषः। तदेवाह ॥नित्येति॥ गृहमेधिनोगृहस्थाः ॥ ८ ॥ तइति ॥ तएवसुराणांसर्वफलदाःकामधेनुकल्पाः कामधेनुकल्पत्वमाह ॥ भक्ष्यमिति ॥ यद्यदिष्टंप्रियं सुपर्वणां देवानाम् ॥ ९ ॥

नित्याग्निहोत्रिणोविप्राःसंतियेगृहमेधिनः ॥ ८ ॥ तएवसर्वफलदाः सुराणांकामधेनवः ॥ भक्ष्यंभोज्यंचपेयंचयद्यदिष्टंसुपर्वणाम् ॥ ९ ॥ अग्नौहुतेनहविषातत्सर्वंलभ्यतेदिवि ॥ नान्यदस्तिसुरेशानामिष्टसिद्धिप्रदंदिवि ॥ १० ॥ दोग्ध्रीधेनुर्यथानीताdुःखदागृहमेधिनाम् ॥

॥ अग्नाविति ॥ हुतेनप्रक्षिप्तेनहविषापुरोडाशादिना तत्सर्वंदिविलभ्यते ॥ ॥ नान्यदिति ॥ देवानामिष्टप्रदंसाधनांतरंनास्तीतिभावः। दिवीतिद्विर्ग्रहणं स्वर्गभेदविवक्षयेतिज्ञेयम् ॥ १० ॥ ततःकिंतत्राह ॥ दोग्ध्रीति ॥ दोहनशीलादो

गध्रीधेनुर्गौः । नीताकेनाचिदपहृतासतीयथागृहमेधिनांदुःखदाभवतितथैवेति । विप्रइत्युपलक्षणंक्षत्रियादेरपि तेनकारणेन । त्रिदशादेवाःविघ्नंतिज्ञानप्रतिबंधं कुर्वंति ॥ ११ ॥ नृणांविषयंस्त्रीपुत्रादिरूपं प्रविष्टाःसंतस्तान्स्त्रीपुत्रादीन्दृष्ट्वामन स्येवंदयते। यदिमयाज्ञाननिष्ठेनभवितव्यंतदातेमरिष्यंति । एवंदेवाःप्रेरयंति ।

तथैवज्ञानवान्विप्रोदेवानांदुःखदोभवेत् ॥ ११ ॥ त्रिदशास्ते
नविघ्नंतिप्रविष्टाविषयंन्नृणाम् ॥ ततोनजायतेभक्तिःशिवेक
स्यापिदेहिनः॥ १२ ॥ तस्मादविदुषांनैवजायतेशूलपाणिनः॥

इदमेवविघ्नाचरणमितिभावः । तथाचश्रुतिः॥ " श्रवणायापिबहुभिर्योनलभ्यः शृण्वतोऽपिबहवोयंनविद्युः" इति॥ ततइति ॥ ततोदेवकृतविघ्नात्कस्यापिदेहि नःपुराणश्रवणादौप्रवृत्तस्यापिशिवेभक्तिर्नजायते ॥ अश्रद्दधानत्वादितिभावः ॥१२॥ तस्मादिति ॥ तस्माद्देवकृतविघ्नादेव । अविदुषांपुराणश्रवणरहितानां

तुशूलपाणिनःभक्तिर्नैवजायते । शूलपाणेरितिवक्तव्येशूलपाणिनइत्यार्षप्रयोग
श्छंदोवद्दषयःकुर्वंतीतिमहाभाष्यात् ॥ यथेति ॥ यथाकथंचिदतिप्रयत्नाच्छिन्ना
भ्रमिवमध्येविच्छिद्यते । ज्ञानोत्पतेः पूर्वमेवनश्यतीत्यर्थः ॥ १३ ॥ जातमिति ॥
अविच्छिन्नयाभक्त्याजातमपिशिवज्ञानंविश्वासंनभजति । अप्रामाण्यशंकया

यथाकथंचिज्जातापिमध्येविच्छिद्यतेनृणाम् ॥ १३ ॥ जातंवा
पिशिवज्ञानंविश्वासंनभजत्यलम् ॥१४॥ ऋषयऊचुः ॥ यद्येवंदे
वताविघ्नमाचरंतितनूभृताम् ॥ पौरुषंतत्रकस्यास्तियेनमुक्तिर्भ
विष्यति ॥ १५ ॥ सत्यंसूतात्मजब्रूहितत्रोपायोऽस्तिवानवा ॥

भिभूतंभवतीत्यर्थः॥१४॥ एवंश्रुत्वाज्ञानेनिराशाःसंतऋषयऊचुः ॥यद्येवमिति॥
एवंप्रागुक्तरीत्यादेवतायदिविघ्नंतनूभृतांदेहिनामाचरंति तर्हितत्रविघ्ननिवारणेक
स्यपौरुषंसामर्थ्यमस्ति येनमुक्तिर्भविष्यति ॥ १५ ॥ सत्यमिति ॥ तत्रदेवकृत

विघ्ननिवारणेउपायोऽस्तिवानवेतिसंशये। उपायोऽस्त्यथवानास्तीतिसत्यमेकमुत्तरंब्रूहीत्यर्थः। एवंमुनिभिःपृष्टेसुगमदुर्गमप्रकारभेदेनोपायमाह ॥ कोटीति ॥ कोटिसंख्याकेषुजन्मस्वर्जितपुण्यैरितिदुर्गमप्रकारभेदः। अस्मिन्प्रकृतजन्मनि शिवेभक्तिःप्रजायतइतिसुगमप्रकारभेदः। संस्कारबलेनअनायासतःशिवेभ

॥ सूतउवाच ॥ कोटिजन्मार्जितैःपुण्यैःशिवेभक्तिःप्रजा
यते ॥ १६ ॥ इष्टापूर्तानिकर्माणितेनाचरतिमानवः ॥
शिवार्पणधियाकामान्परित्यज्ययथाविधि ॥ १७ ॥

क्तेर्जायमानत्वात्। अग्रेभक्तिदृढीकरणादिसाधनेष्वीश्वरप्रेरणापुंप्रयत्नश्चद्वयमपिकारणम्। पुरुषप्रयत्नानंगीकारेविधिवाक्यमनर्थकंस्यात्। "दैवंपुरुषकारश्चसिद्ध्यतोऽन्योन्यसंश्रयात्" इत्यादित्यपुराणविरोधश्च। येनकारणेनद्वयमप्यपेक्षितंतेनकारणेनेत्यर्थः ॥१६॥ इष्टेति ॥ इष्टानियागाः। पूर्तानितडागारामा

दीनि। इष्टानिचपूर्तानिचेतिद्वंद्वेअन्येषामपिदृश्यतइतिदीर्घः। इहबहुकृतप्राग्भावीयसुकृतसंपत्त्याशिवेभक्तिः। ततईश्वरार्पणबुद्ध्यानिष्कर्मानुष्ठानंततश्चित्तशुद्धिः। ततोनित्यानित्यवस्तुविवेकः। ततइहामुत्रार्थफलभोगविरागः। ततःशमादिसंपत्ततोमुमुक्षा ततोजिज्ञासा ततःसंन्यासस्ततोगुरूपसत्तिस्ततःश्रवणमनने ततोनिदिध्यासनंततोऽप्रतिबुद्धसाक्षात्कारस्ततोयावत्प्रारब्धंजीवन्मुक्तिस्ततःप

अनुग्रहात्तेनशंभोर्जायतेसुदृढोनरः॥ ततो
भीताःपलायंतेविघ्नंहित्वासुरेश्वराः॥१८॥

रमामुक्तिरितिसिद्धांतसंमतःपंथाः। ततःशिवेभक्तिर्जनिष्यमाणांकार्यकारणपरंपरामाह ॥ शिवार्पणेति॥ कामान्फलवासनाःपरित्यज्यशिवार्पणबुद्ध्यायथाविधि इष्टापूर्तान्याचरतीतिपूर्वेणान्वयः। तेनाशिवार्पणबुद्ध्याकृतेनकर्मणेत्यर्थः। शंभोरनुग्रहःप्रसादोभवति॥१७॥ अन्विति॥ तस्मादनुग्रहात्सुदृढोनरोजाय

ते । विघ्नबाहुल्येप्राप्तेऽपिशिवभक्तौनिश्चितबुद्धिरित्यर्थः ॥ ततइति ॥ ततोनिश्चितबुद्धेःपुरुषाच्छापसंभावनयाभीताःसंतोविघ्नंहित्वाविघ्नाचरणंविहायपलायंतइत्यर्थः ॥ १८ ॥ जायतइति ॥ तेनाविघ्नपरिहारेणचंद्रमौलिनश्चंद्रशेखरस्यचरितेशुश्रूषाश्रवणेच्छाजायते । एवंसगुणनिर्गुणचरितंशृण्वतःक्रमाद्वैराग्यंततो

जायतेतेनशुश्रूषाचरितेचंद्रमौलिनः ॥ शृण्वतोजायतेज्ञानं
ज्ञानादेवविमुच्यते ॥ १९ ॥ बहुनात्रकिमुक्तेनयस्यभक्तिः
शिवेदृढा ॥ महापापौघपापौघकोटिग्रस्तोविमुच्यते ॥२०॥

ध्यासनिवृत्तिस्ततोब्रह्मात्मैक्यज्ञानंततोमुक्तोभवतीत्यर्थः ॥ एवकारेण "तमेवविदित्वातिमृत्युमेति" इत्यादिश्रुतयःसंगृहीताः ॥ १९ ॥ बहुनेति ॥ अत्रशिवभक्तौबहुनाउक्तेनभाषणेनकिंनकिमपिप्रयोजनमित्यर्थः । यस्यपुरुषधौरेयस्य शिवेदृढाभक्तिःजातेतिशेषः । समहापापौघःपंचमहापापानि अन्यानिपापानिते

षांसमुदायश्चतेषांकोटिभिर्ग्रस्तोऽपिविमुच्यते । "मांहिपार्थव्यपाश्रित्ययेऽपिस्युः पापयोनयः ॥ अपिचेत्सुदुराचारोभजतेमामनन्यभाक् ॥ साधुरेवसमंतव्यः" इत्यादिस्मृतेः । नन्वेवंविधेषुपापेषुसत्सु कथंभक्तिर्भविष्यतीतिकुतर्कोनविधेयः । अस्मिन्जन्मनिजातयाप्रवर्धमानयाशिवभक्त्या प्राग्भवीयंतादृशंकिंचित्कारण मर्थापत्त्याकल्प्यते तत्कारणंतानिसर्वाणिपापानिपराणुद्यस्वकार्यभूतांभक्तिंजन

संसारबंधनात्तस्मादन्यःकोवाविमूढधीः ॥ २१ ॥

यति । साभक्तिस्तान्यनारब्धफलानिसर्वपापानिनाशयतीतिकल्प्यते । अन्यथा "धर्मेणपापमपनुदति" इत्यादिबहुश्रुतिस्मृतिव्याकोपःप्रसज्येतेतिदिक् २० तस्मात्कारणादन्योविमूढधीरपिशिवभक्त्यापिनविमुच्यते एतादृशःकोवा नको ऽपीत्यर्थः । परमपापिष्ठोऽपिशिवभक्त्यासंसारबंधनान्मुक्तोभवतीतिभावः ॥२१॥

कैमुतिकन्यायमुदाहरति ॥नियमादिति॥ द्रोहंद्वेषंचेद्यदिनियमात्करोति। तस्या पिद्रोग्धुर्वाप्यसौशिवःप्रसन्नःसन्वांछितंफलंयच्छति । एवंसतिभक्तिंकुर्वतस्तुवां छितंयच्छतीतिकिमुवक्तव्यमितिभावः। अत्रमध्वाः। भक्तिरेवभगवत्प्रसादंप्रति कारणंद्वेषादिकंतुनरकसाधनमित्याहुः। तदसत्। भागवते। पूतनामुपक्रम्योक्त

नियमाद्यस्तुकुर्वीतभक्तिंवाद्रोहमेववा ॥ तस्यापिचेत्प्रसन्नो ऽसौफलंयच्छतिवांछितम् ॥ २२ ॥ ऋद्धंकिंचित्समादायक्षुल्लं कंजलमेववा ॥ योदत्तेनियमेनासौतस्मैदत्तेजगत्त्रयम् ॥ २३ ॥

म्। "पूतनालोकबालघ्नीराक्षसीरुधिराशना ॥ जिघांसयापिहरयेस्तनंदत्वाप सद्गतिम्"। अन्यच्च "गोप्यःकामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥ कामंक्रोधं भयंस्नेहमैक्यंसौहृदमेवच ॥ नित्यंहरौविदधतोयांतितन्मयतांहिते" इत्यादि विरोधात्॥ २२ ॥ नेश्वरभक्तौकोऽपिप्रयासइत्याशयेनाह ॥ ऋद्धमिति॥ वि

भवेसतिसर्वोपचारपूर्णवाभवतुदारिद्र्येसतिक्षुल्लकंस्वल्पंजलमेववाभवतु। तत्सम र्पणमेवमुख्यमितिभावः। उभयोरपिफलसाम्यमाह ॥ जगत्त्रयमिति ॥ भक्त कृतनियमएवेश्वरस्यप्रीतिर्नतुप्रदेयवस्तुविशेषइतिभावः ॥ २३ ॥ २४ ॥ प्रद

तत्राप्यशक्तोनियमान्नमस्कारंप्रदक्षिणाम् ॥ यःकरोति
महेशस्यतस्मैतुष्टोभवेच्छिवः ॥ २४ ॥ प्रदक्षिणास्वश
क्तोऽपि यःस्वांतेचिंतयेच्छिवम् ॥ गच्छन्समुपविष्टो
वातस्याभीष्टंप्रयच्छति ॥ २५ ॥ चंदनंबिल्वकाष्ठस्य
पुष्पाणिवनजान्यपि ॥ फलानिताद्दशान्येवयस्यप्रीति
कराणिवै ॥ दुष्करंतस्यसेवायांकिमस्तिभुवनत्रये ॥ २६ ॥

क्षिणास्विति ॥ स्वांतेमनसि। आसनादिनियमोऽपिनास्तीत्याह ॥ गच्छन्नि ति ॥ २५ ॥ अतिसौलभ्यमाहसार्धेनश्लोकेन ॥ चंदनमिति ॥ दुष्करंदुःसंपा

दम् ॥ २६ ॥ सहजसरलत्वंशिवस्याह ॥ वन्येष्विति ॥ " यादृगादौसूत्रमते कर्मकर्तरिकृत्स्मृतः ॥ महाभाष्येलिवेत्यर्थेदृग्दृशौताद्धितौमतौ " ॥ २७ ॥ अभ क्तंनिंदति ॥ तमिति ॥ इंद्रादयःसर्वेऽपिजीवाएवपुण्यविशेषेणदेवत्वंप्राप्तास्तांयां

वन्येषुयादृशीप्रीतिर्वर्ततेपरमेशितुः ॥ उत्तमेष्वपिनास्त्ये वग्रामजेष्वपितादृशी ॥ २७ ॥ तंत्यक्त्वातादृशंदेवंयः सेवेतान्यदेवताम् ॥ सहिभागीरथींत्यक्त्वाकांक्षतेमृगतृ ष्णिकाम् ॥ २८ ॥ किंतुयस्यास्तिदुरितंकोटिजन्मसुसं चितम् ॥ तस्यप्रकाशतेनायंत्वर्थोमोहांधचेतसः ॥ २९ ॥

चकांचनदेवतामित्यर्थः ॥ मृगतृष्णिकांमृगजलम् । परमार्थतोऽभेदेऽपिव्यावहा रिकभेदाभिप्रायेणोक्तमितिभावः ॥ २८ ॥ ननुयदीश्वरस्यपूजादिकमतिसुलभं महाफलंचतर्हिदेहीतदनादरेणसंसारेकिमितिभ्राम्यतीत्यतआह ॥ किंत्विति ॥

अयमर्थः । सौलभ्येनमहाफलप्राप्तिरूपः मोहेनाज्ञानेनअंधंविचारशून्यंचेतोय स्यसतथाभूतस्तस्य ॥ २९ ॥ सौकर्यांतरमाह ॥ नेति ॥ यत्रास्योपासकस्य चित्तंरमतेप्रसन्नंभवति ॥ तत्रस्वात्मत्वेनाशिवस्यकेवलंध्यानेनध्यानमात्रेणेत्यर्थः॥ शिवसायुज्यंप्राप्नुयात् ॥ ततःक्रमेणशुद्धमुक्तिमपि ॥३०॥ इदंस्वात्मत्वेनोपासनं

नकालनियमोयत्रनदेशस्यस्थलस्यच ॥ यत्रास्यरमतेचि त्तंतत्रध्यानेनकेवलम् ॥ स्वात्मत्वेनाशिवस्यासौशिवसायु ज्यमाप्नुयात् ॥ ३० ॥ अतिस्वल्पतरायुःश्रीभूतेशांशाधि पोऽपियः॥सतुराजाहमस्मीतिवादिनंहंतिसान्वयम्॥३१॥

प्राकृतप्रभूणांप्रतिकूलंनतुसर्वज्ञस्येश्वरस्येत्याह ॥ अतीति ॥ अतिस्वल्पतरे आयुःश्रियौयस्यसतथा । भूतेशस्यशिवस्यांशभूतोमहाराजः सोऽधिपोयस्यस तथा मांडलिकइत्यर्थः । एतादृशःसतुअहंराजेतिवादिनंसान्वयंपुत्रपौत्रादियु

क्तंहंति ॥ ३१ ॥ एवंक्षुद्रप्रभोःस्थितिंप्रतिपाद्यमहाप्रभोःशिवस्यास्थितिमाहसा धैन ॥ कर्तेति ॥ "भुवनस्यकर्ता" इतिश्रुतेः ॥ अक्षयेति ॥ "एतावानस्यम हिमा" इतिश्रुतेः ॥ यंकंचनआपाततःश्रुतवेदांतमपीत्यर्थः। तादात्म्यभाजंसा

कर्तापिसर्वलोकानामक्षयैश्वर्यवानपि ॥ शिवःशिवोऽहमस्मीतिवा दिनंयंचकंचन ॥ आत्मनासहतादात्म्यभागिनंकुरुतेभृशम् ॥३२॥
धर्मार्थकाममोक्षाणांपारंयास्यंतियेनवै ॥ मुनयस्तत्प्रवक्ष्यामिव्र तंपाशुपताभिधम् ॥ ३३ ॥ कृत्वातुविरजांदीक्षांभूतिरुद्राक्षधा रिणः ॥ जपंतोवेदसाराख्यंशिवनामसहस्रकम् ॥ ३४ ॥

युज्यभाजमित्यर्थः। इदमुपासनंक्रममुक्तिपरम्। पंचम्यामुक्तेरग्रेवक्ष्यमाणत्वा दितिभावः ॥ ३२ ॥ अंतःकरणशुद्धावुपायांतरंप्रतिजानीते ॥ धर्मार्थेति ॥ पारं सिद्धिम् ॥ ३३ ॥ यदुपक्रांतंव्रतंतस्यविधिमाह ॥ कृत्वेति ॥ दीक्षानाम विरजा

मिति। विगतंरजःपापंयेषांतेविरजसःनिष्पापाः। विरजसस्तत्करोतीतिण्यंतात्प चाद्यच्। णाविष्ठवदितिटिलोपइतिसर्वस्वकारप्रभृतयः। वस्तुतस्त्वकारांतोऽपिर जशब्दोऽस्ति। "रजोऽयंरजसासार्धंस्त्रीपुष्पगुणधूलिषु" इतिकोशात्॥ ३४॥ ततःकिंस्यादित्यतआह॥ संत्यज्येति॥ तेनव्रतेनमर्त्यत्वंमरणधर्मत्वंसंत्यज्यशै

संत्यज्यतेनमर्त्यत्वंशैवींतनुमवाप्यच ॥ ततःप्रसन्नोभगवाञ्छंक
रोलोकशंकरः॥ भवतांदृश्यतामेत्यकैवल्यंवःप्रदास्यति ॥ ३५॥
रामायदंडकारण्येयत्प्रादात्कुंभसंभवः॥ तत्सर्वंवःप्रवक्ष्यामिशृणु
ध्वंभक्तियोगिनः॥३६॥इतिश्रीपद्मपुराणेशिवगी०प्रथमोऽध्यायः१

वींशिवसाक्षात्कारयोग्याम्। दृश्यतांप्रत्यक्षत्वमेत्यप्राप्यवःयुष्मभ्यंकैवल्यंपरम मुक्तिम्॥३५॥रामायेति॥ कुंभसंभवोऽगस्त्यःयद्दीक्षादिकम्। भक्तियोगोविद्यते येषांतेतथोक्ताःसंतःशृणुध्वंशृणुतेत्यर्थः॥३६॥ इतिश्रीशिव०टी०प्रथमो०॥१॥

श्रीगणेशायनमः ॥ ॥ पूर्वाध्यायांते "रामायदंडकारण्येयत्प्रादात्कुंभसंभवः॥ तत्सर्वंवःप्रवक्ष्यामि" इत्युक्तंतच्छ्रोतुकामाउपोद्घातंरचयंतो ऋषयऊचुः ॥ किमर्थमिति ॥ सार्धश्लोकेनअगंपर्वतंस्त्यायतिस्वींकरोतिसतथा । महासमर्थोमुनिः । किमर्थंकस्मैप्रयोजनायरामचंद्रस्यसंनिधिमागतः । कथंकेनप्रकारे

॥ ऋषयऊचुः ॥ किमर्थमागतोऽगस्त्योरामचंद्रस्यसंनिधिम् ॥
कथंवाविरजांदीक्षांकारयामासराघवम् ॥१॥ ततःकिमाप्तवान्
रामःफलंतद्वक्तुमर्हसि ॥ सूतउवाच ॥ रावणेनयदासीतापहृता
जनकात्मजा ॥ तदावियोगदुःखेनविलपन्नास राघवः ॥ २ ॥

णरामंविरजांदीक्षांकारयामास । किमर्थमित्यत्र "निमित्तपर्यायप्रयोगेसर्वासांप्रायदर्शनम्" इतिद्वितीया । राममित्यत्र "हृक्रोरन्यतरस्याम्" इतिद्वितीया ॥ १ ॥ ततइति ॥ दीक्षांतेएवंपृष्टःसूतोरामसंनिधावगस्त्यागमनेहेतुमाह ॥

रावणेनेति ॥ विलपन्परिदेवनंकुर्वन्नास तस्थावित्यर्थः ॥ २ ॥ तामवस्थामाह ॥ निर्निंद्रइति ॥ आसेतिपूर्वेणसंबंधः । ततःसानुजोलक्ष्मणसहितः । प्राणान् मोक्तुंत्यक्तुमैच्छत् ॥३॥ लोपामुद्रापतिरगस्त्यःसंसारस्यअसारताम् ॥४॥ योग

निर्निंद्रोनिरहंकारोनिराहारोदिवानिशम् ॥ मोक्तुमैच्छतत्तः
प्राणान्सानुजोरघुनंदनः॥३॥ लोपामुद्रापतिर्ज्ञात्वातस्यसं
न्निधिमागमत् ॥ अथतंबोधयामाससंसारासारतांमुनिः ॥
॥ ४ ॥ अगस्त्यउवाच ॥ किंविषीदसिराजेंद्रकांताकस्यवि
चार्यताम् ॥ जडःकिंनुविजानातिदेहोऽयंपांचभौतिकः॥५॥

जधर्मप्रत्यासत्त्यारामवृत्तांतंज्ञात्वा स्वयमेवागत्यलोकानुसारेणविलपंतंरामंप्रत्य गस्त्यउवाच ॥ हेरामत्वंकिंविषीदसि । किंनिमित्तंशोचसि ननुकांतार्थंविषीदामी तिचेत्तत्राह ॥ कांतेति ॥ कस्यकांतेतित्वयाविचार्यताम् । भार्याविरहजंदुःखं

किंदेहस्याहोस्विदात्मनइतिविकल्प्यप्रथमंपक्षंदूषयति ॥ जडःकिंन्विति ॥ अयं पांचभौतिकःपंचभूतकार्यंदेहः । अतएवजडःकिन्नुविजानातीत्याक्षेपः । नजाना तीत्यर्थः । प्रयोगश्चदेहोनज्ञानाश्रयः । भूतत्वाद्घटवत् यदिज्ञानाश्रयःस्यात्तर्ह्य भूतोऽपिस्यादितिपक्षेविबाधकतर्कसत्त्वात् ॥ ५ ॥ तनुतर्हिआत्मनएवदुःखादिक मित्याशंकायामाह ॥निर्लेपइति॥ आत्मानजायतेनापिम्रियतेनापिदुःखभाक् ।

निर्लेपःपरिपूर्णश्चसच्चिदानंदविग्रहः ॥ आत्मानजायतेनैवम्रियते नचदुःखभाक् ॥ ६ ॥ सूर्योऽसौसर्वलोकस्यचक्षुष्ट्वेनव्यवस्थितः ॥

तत्रदुःखाभावेहेतुः ॥ निर्लेपइति ॥ अतएवसच्चिदानंदविग्रहः । जन्माभावेनाशा भावेचहेतुः ॥ परिपूर्णइति ॥ “ असंगोह्ययंपुरुषःअविनाशीवाअरेऽयमात्मा ” इत्यादिश्रुतेः ॥ ६ ॥ निर्लेपतांदृष्टांतेनोपपादयतिसार्धेन । ननुदेहयोगेनात्मनो पिदुःखादिप्रसज्येतेत्याशंक्याह ॥ सूर्यइति ॥ अत्रतथाशब्दाद्यथेत्याक्षिप्यते ।

यथायद्यपीत्यर्थः । सूर्यःसर्वलोकस्यचक्षुष्ट्वेनचक्षुरधिष्ठातृत्वेन । तथाचश्रुतिः। "आदित्यश्चक्षुर्भूत्वाक्षिणीप्राविशत्" इति । व्यवस्थितः। तथापिचाक्षुषैश्चक्षुर्जैर्न्यैर्दोषैर्नलिप्यते ॥ ७ ॥ तद्वद्दुःखैर्नलिप्यतेनसंबद्ध्यते । अस्मिन्नर्थेसूर्योयथा सर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैरिति । एवमात्मनोनिर्लेपत्वमनाद्यनं

तथापिचाक्षुषैर्दोषैर्नकदाचिद्विलिप्यते ॥ ७ ॥ सर्वभूतांतरा
त्मापितद्वद्दुःखैर्नलिप्यते ॥ देहोऽपिमलपिंडोऽयमुक्तजीवो
जडात्मकः ॥८॥ दह्यतेवह्निनाकाष्ठैःशिवाद्यैर्भक्ष्यतेऽपिवा ॥

तत्वंपरिपूर्णत्वंप्रतिपाद्यवैराग्यार्थंपुनर्देहस्यजडत्वंविवृणोति ॥ देहोऽपीति ॥ सार्धेनअयंप्रत्यक्षोदेहोऽपिअपिशब्देनसमीचीनतयाभासमानोऽपिमलपिंडःअमेध्यस्वरूपः। जीवोनामजीवोपाधिर्लिंगदेहः। तथाचमुक्तोजीवोयेनसतथालिंगदेहविरहितःसन् मृतःसन्नित्यर्थः ॥ ८ ॥ वह्निनाकर्त्राकाष्ठैःकरणभूतैर्दह्यते शिवा

सृगालस्तदाद्यैर्भक्ष्यते। तथापिदग्धोऽपिशिवाद्यैर्भक्षितोऽपिनैवजानातिसुखदुःखादिकमितिशेषः। एवंभूतस्यजडस्यवियोगेकाव्यथा ॥९॥ विरहेतस्यकाव्यथेत्युक्तंतत्रतच्छब्दवाच्यस्यदेहस्यदुर्निरूपत्वंप्रतिजानीते ॥ सुवर्णगौरीत्यादिभिः सार्धैश्चतुर्भिःश्लोकैः ॥ सुवर्णेति ॥ आभोगोविस्तारः। तेननभुग्नंनम्रंसूक्ष्मं

तथापिनैवजानातिविरहेतस्यकाव्यथा ॥ ९ ॥ सुवर्णगौरी
दूर्वायादलवच्छ्यामलापिवा ॥ पीनोत्तुंगस्तनाभोगभुग्न
सूक्ष्मावलग्नका ॥ १० ॥ बृहन्नितंबजघनारक्तपादसरोरु
हा ॥ राकाचंद्रमुखीबिंबप्रतिबिंबरदच्छदा ॥ ११ ॥

कृशमवलग्नंमध्यंयस्याःसातथा ॥ १० ॥ बृहदिति ॥ "पश्चान्नितंबःस्त्रीकट्याःक्लीबेतुजघनंपुरः" इत्यमरः। बृहतीनितंबजघनेयस्यास्तथोक्ता। रक्तेलोहितेपादावेवसरोरुहेयस्याःसाराकापूर्णिमाबिंबंबिंबफलंतस्यप्रतिबिंबःसदृशःर

दच्छदओष्ठोयस्याःसा ॥ ११ ॥ नीलेति ॥ नीलेंदीवरस्यसदृशंनीलेंदीवरनीका शमित्यस्वपदविग्रहः । मयूरव्यंसकादित्वात्समासः । तथाविधनयनद्वयेनशोभि ता । संलापोभाषणम् ॥ १२ ॥ कटाक्षैरिति ॥ कटाक्षैरपांगवीक्षणैः पंचेषुर्मद

नीलेंदीवरनीकाशनयनद्वयशोभिता ॥ मत्तकोकिलसल्लापा मत्तद्विरदगामिनी ॥ १२ ॥ कटाक्षैरनुगृण्हातिमांपंचेषुशरो त्तमैः ॥ इतियांमन्यतेमूर्खःसचपंचेषुशासितः ॥ १३ ॥ तस्या विवेकंवक्ष्यामिशृणुष्वावहितोनृप ॥ नचस्त्रीनपुमानेषनचै वायंनपुंसकः॥ अमूर्तःपुरुषःपूर्णोद्रष्टासाक्षीसजीवनः ॥ १४ ॥

नस्तस्यशरेभ्योऽप्युत्तमैः । अनुगृण्हातिस्वकीयत्वेनांगीकरोति । सपंचेषुणाशा सितोवशीकृतः अतएवमूर्खः ॥ १३ ॥ तस्याःस्त्रियाविचारम् । अवहितोदत्तचि त्तः । तस्याविवेकंवक्ष्यामीत्युक्तंतदेवाह ॥ नचेति ॥ तस्यास्तस्यचशरीरेचेत

नत्वेनावस्थितएषपरमात्मैव । सचनस्त्रीनचपुमान् नवायंनपुंसकः । इमाःसंज्ञा अवयविनामेव । अयममूर्तः परिच्छेदरहितः । अतएवपूर्णःद्रष्टा । ननुसर्वस्य द्रष्टृत्वेसुखदुःखादिप्रसंगःस्यादितिचेन्न साक्षीनिर्लेपः । जीवनंप्राणधारणंतस्य निर्वाहितृत्वात् । सजीवनः । यत्सत्तानुविद्धतयाप्राणेंद्रियादयःप्रवर्ततइतिभावः ।

यातन्वंगीमृदुर्बालामलपिंडात्मिकाजडा ॥ सानपश्यतियत्किं
चिन्नश्रृणोतिनजिघ्रति ॥ १५ ॥ चर्ममात्रातनुस्तस्याबुद्ध्यावी
क्षस्वराघव ॥ याप्राणादधिकासैवहंततेस्याद्घृणास्पदम् ॥१६॥

एतादृशःपरमात्मानशोकार्हइतिभावः ॥ १४ ॥ ननुजीवः परमात्मैवचेत्तंनशो चामिकिंतुतदुपाधिंदेहंशोचामीतिचेन्नैवमित्याह ॥ यातन्वंगीति ॥ मलपिंडए वआत्मास्वरूपंयस्याःसा । यातवाभिमतासानपश्यति । यत्किंचिन्नश्रृणोतिन जिघ्रति । अतःकाष्ठवज्जडेतिभावः ॥ १५ ॥ चर्मेति ॥ हेराघवतस्यास्तनुर्देहः

चर्ममांत्रातदंतमांसरक्तादिकास्ति। नतत्रस्पृहणीयंकिमप्यस्तीतिबुद्ध्यावीक्षस्व आलोचय। आलोचनस्यफलमाह ॥येति॥ याप्राणादप्यधिकासातवैवघृणास्पदं जुगुप्साविषयःस्यात्। तस्मात्स्त्र्यादिदेहमविचाररमणीयमितिभावः। जुगुप्सिते शोकोनकार्यइतिभावः ॥१६॥ शोकपरिहारेयुक्त्यंतरमाह ॥जायंतइतिसार्धेन॥ असंदिग्धेऽपियदीतिप्रयोगः ॥ यदिवेदाःप्रमाणमितिवत्। देहिनोनित्यस्यात्म

जायंतेयदिभूतेभ्योदेहिनःपांचभौतिकाः ॥
आत्मायदेकलस्तेषुपरिपूर्णःसनातनः॥१७॥

नःपांचभौतिकाःपंचमहाभूतविकारादेहाइत्यर्थः। भूतेभ्योजायंतेनत्वात्मनःसका शात्। आत्मनोनिर्विकारत्वात्। देहानांभूतकार्यत्वादचेतनत्वम्। तेषुपरिपूर्ण आत्मातुसनातनएकलश्च। औपाधिकनानात्वेऽपिवस्तुतएकएवेत्यर्थः। "आत्मा वाइदमेकएवाग्रआसीत्। एकोदेवःसर्वभूतेषुगूढः" इत्यादिश्रुतेः। यद्यस्मात्का

रणादेकस्यात्मनोदेहात्मनोःसंबंधआविद्यकएवेतिभावः॥१७॥केति॥ तत्रतथास तिकाकांतास्त्री कांतश्चपुमान्कः । नकोऽप्येवंविधोभेदइत्यर्थः। उपादानाद्ब्रह्मण औपाधिकानांजीवानामुपाधीनांदेहानांचजातत्वात् । सर्वेसहोदराएवएकरूपाए वेत्यर्थः ॥१८॥ ननुदेहदृष्ट्यानुशोचामीतिचेत्तत्राह ॥ निर्मितायामिति ॥ गृहा

काकांतातत्रकःकांतःसर्वएवसहोदराः ॥ १८ ॥ निर्मितायां
गृहावल्यांतदवच्छिन्नतांगतम् ॥ नभस्तस्यांतुदग्धायां
नकांचित्क्षतिमृच्छति ॥ १९ ॥ तद्वदात्मापिदेहेषुपरिपूर्णः
सनातनः ॥ हन्यमानेषुतेष्वेवस्वयंनैवविहन्यते ॥ २० ॥

वल्यांगृहपंक्तौनिर्मितायांसत्यांतदवच्छिन्नतांतत्तद्गृहपरिच्छेद्यतांगतंनभः। तस्यां गृहावल्यांदग्धायामपिकांचिदपिक्षतिंहानिंनार्छतिनप्राप्नोति॥१९॥ तद्वदात्मापि देहेषुहन्यमानेष्वपिनविहन्यतइति। एकंवस्तुजन्यत्वात्सर्वसहोदरदृष्ट्यावाअमे

ध्यदेहादिभंगेष्वधिष्ठानस्याभंगाद्धानशोकस्यावसरइतिभावः ॥ २० ॥ ननुको ऽप्येवंनबुद्ध्यतेसर्वलोकोऽपिवध्यघातकपाल्यपालकादिव्यवहारेणैवप्रवर्ततइत्या शंक्याह ॥ हंतेति ॥ हंताचेद्यद्यहंहंतेतिमन्यते । तुपुनःहतःपुरुषश्चेद्धंतुःसकाशा द्धतमात्मानंमन्यते । तर्हिंतावुभावपिनविजानीतः । यतोऽयमात्मानहंतिनहन्यते

हंताचेन्मन्यतेऽहतुर्हतश्चेन्मन्यतेहतम् ॥ तावुभौनविजानी तोनायंहंतिनहन्यते ॥२१॥ अस्मान्नृपातिदुःखेनकिंखेदस्या स्तिकारणम् ॥ स्वस्वरूपंविदित्वेदंदुःखंत्यक्त्वासुखीभव२२

च असंगत्वान्नित्यत्वाच्चेतिभावः। एवंलौकिकःसर्वोऽपिव्यवहारोमिथ्यैव ॥२१॥ अस्मादिति ॥ अस्मादुक्तहेतोरित्यर्थः । हेनृपराजन् । अतिदुःखेनयःखेदःदै न्यंतस्यकिंकारणमस्ति । नकिमप्यस्तीत्यर्थः । इदंसच्चिदानंदात्मकंस्वस्वरूपं विदित्वासुखीभव ॥ २२ ॥ एवमगस्त्यस्योपदेशमाकर्ण्यासंभावनयापराभूतः

श्रीरामउवाच ॥ मुनइतित्रिभिः ॥ हेमुनेमननशीलदेहस्यदुःखसंबंधोनास्तिज डत्वाद्घटवत् । परमात्मनोऽप्यसंगत्वान्नैवचेत्तर्हिसीतावियोगदुःखमेवाग्निः । स्पष्ट मन्यत् ॥ २३ ॥ सदेति ॥ यथादुःखादिःसर्वैःसदानुभूयतेसनास्तीतित्वयोक्तः

॥ श्रीरामउवाच ॥ मुनेदेहस्यनोदुःखंनैवचेत्परमात्मनः ॥
सीतावियोगदुःखाग्निर्मांभस्मीकुरुतेकथम् ॥ २३ ॥ सदानु
भूयतेयोऽर्थःसनास्तीतित्वयेरितः ॥ जायतांतत्रविश्वासः
कथंमेमुनिपुंगव ॥२४॥ अन्योऽस्तिनास्तिकोभोक्तायेनजं
तुःप्रतप्यते ॥ सुखस्यवापिदुःखस्यतद्ब्रूहिमुनिसत्तम ॥२५॥

तत्रत्वदुक्तौमेविश्वासःकथंजायताम् । अग्निस्पर्शाद्दग्धहस्तस्यअग्निरनुष्णइति वाक्येकथंविश्वासोजायतामितिभावः ॥२४॥अन्यइति॥ शरीरस्यजडत्वेपरमा त्मनश्चाभोक्तृत्वेताभ्यामन्येनभोक्त्राभवितव्यम् । ताभ्यामन्यःकश्चिद्भोक्तास्तिना

स्तिवेतिविकल्प्यद्वितीयंपक्षंदूषयति । यद्यन्योऽपिनास्तितर्हिंसुखादेर्भोक्ताकस्त
द्ब्रूहि । येनभोक्तृत्वेनजंतुः शरीरीप्रतप्यतेतापंप्राप्नोति । तथाचभोक्तुरपलापेप्रत्य
क्षविरोधइतिमोक्षशास्त्रानर्थक्यंचप्रसज्येतेतिभावः ॥२५॥ एवंपृष्टोऽगस्त्योमाया
यादुर्ज्ञेयत्वप्रतिपादनेनसंशयंनिराचिकिर्षुरगस्त्यउवाच ॥ दुर्ज्ञेयेत्यादिना ॥
शांभवीतिशंसुखंतद्रूपोभवतीतिशंभुस्तस्येयंशांभवीतिविषयत्वमाधारत्वंवाषष्ठ्य

अगस्त्यउवाच ॥ दुर्ज्ञेयाशांभवीमायातयासंमोह्यते
जगत् ॥ मायांतुप्रकृतिंविद्धिमायिनंतुमहेश्वरम् ॥

र्थः । तथानचिन्मात्रविषयंचिन्मात्राधारंवात्रिगुणात्मकंसदसद्विलक्षणंभावरूप
मज्ञानंसैवमायेत्युच्यते । चिन्मात्राधारत्वेप्रमाणभूतांश्रुतिमाह ॥ मायांत्विति ॥
तयामाययाजगत्संमोह्यते । मोहस्वरूपमित्थम् । मायोपाधिकंचैतन्यमीश्वरः ।
मायाकार्येऽहंकारेप्रतिबिंबितंचैतन्यंजीवः । सचौपाधिककर्तृत्वभोक्तृत्वप्रमातृत्वा

दिधर्मवान् । अतोनानुभवविरोधःनवाशास्त्रानर्थक्यंच । यत्तुआत्मानभोक्तेतिश्रा गुक्तंतत्तुईश्वेरोनभोक्तेत्याशयेन । प्रतिबिंबस्यापिभोक्तृत्वादिकंसंनियोगशिष्टम् । अहंकारस्यापगमेकर्तृत्वादेरप्यपगमात् । तदुक्तम् । "आत्माकर्त्रादिरूपश्चेन्मा कांक्षीस्तर्हिमुक्तताम् ॥ नहिस्वभावोभावानांव्यावर्तेतौष्ण्यवद्रवेः" इति । अहं कारतादात्म्येनाहंसुखीदुःखीचेत्याद्यविवेकेनसर्वंजगत्क्लिश्यतीतिभावः ॥ २६ ॥

तस्यावयवभूतैस्तुव्याप्तंसर्वमिदंजगत् ॥२६॥ सत्यज्ञानात्मकोऽनंतो विभुरात्मामहेश्वरः ॥ तस्यैवांशोजीवलोकेहृदयेप्राणिनांस्थितः॥२७॥

श्रुत्युक्तमहेश्वरपदस्यार्थमाह ॥ सत्येति ॥ सत्यंकालत्रयाबाध्यंज्ञानंनामप्रका शआत्मस्वरूपंयस्यसतथा अनंतस्त्रिविधपरिच्छेदशून्यः । अतएवविभुर्व्यापकः । अतएवात्मासर्वत्रानुभूतएवंविधोमहेश्वइत्युच्यते । मायावच्छिन्नत्वेऽपिमहेश्वर त्वादनावृतज्ञानइत्यर्थः । श्रुत्युक्तोत्तरार्धस्यार्थमाह ॥ तस्येति ॥ लोक्यतइति

लोकः जीवानांलोकःसतथातस्मिन्जीवलोके प्राणिनांहृदयेस्थितः। तस्यैवमहेश्वरस्यांशःप्रतिबिंबइत्यर्थः । जीवइत्युच्यते । "यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन्॥उपाधिनाक्रियतेभेदरूपोदेवःक्षेत्रेष्वेवमजोऽयमात्मा॥ एकएवहिभूतात्माभूतेभूतेव्यवस्थितः ॥ एकधाबहुधाचैवदृश्यतेजलचंद्रवत् ॥ रूपंरूपंप्रतिरूपोबभूव॥ जीवेशावाभासेनकरोति मायाविद्याचस्वयमेवभवति"

विस्फुलिंगायथावह्नेर्जायंतेकाष्ठयोगतः ॥

इत्याद्याःश्रुतयः। " ममैवांशोजीवलोकेजीवभूतःसनातनः" इत्याद्याःस्मृतयश्चप्रमाणम्। ननु "तस्यावयवभूतेनव्याप्तंसर्वमिदंजगत्"॥ इत्युक्त्वाज्जीवस्यव्यापकत्वंप्राप्तंतर्हिघटाद्यवच्छेदेनापिसुखादिभोगःस्यादित्याशंक्याह॥ हृदयेस्थित इति ॥ हृदयावच्छेदेनैवतस्यभोगः ॥ २७॥ नन्वहंकारस्यादित्वात्तदवच्छिन्नो जीवोऽपिसादिःस्यादित्याशंक्याह ॥विस्फुलिंगाइति॥ यथाविस्फुलिंगाःप्राक्

सूक्ष्मरूपेणावस्थिताःसंतएवकाष्ठयोगतोजायंतेऽव्यक्ताभवंति तद्वदनादिकर्मभिर्वासनाभिश्चसंबद्धास्तादात्म्यमापन्ना महेशितुरंशाजीवा अहंकारयोगतःप्राक्स्थिताःसंतएवाभिव्यज्यंते । तथाचसूत्रम् । "पुंस्त्वादिवत्तस्यसतोऽभिव्यक्तियोगादिति" अयमर्थःसंपन्नः । सृष्टेःप्रागनादिकर्मसंस्कारयुक्ताजीवा माया

अनादिकर्मसंबद्धास्तद्वदंशामहेशितुः ॥ अनादिवासनायुक्ताःक्षेत्रज्ञाइतितेस्मृताः ॥२८॥ मनोबुद्धिरहंकारश्चित्तंचेति चतुष्टयम् ॥ अंतःकरणमित्याहुस्तत्रतेप्रतिबिंबिताः ॥२९॥

यांलीनाःसंतःसृष्टिकालेऽहंकारावच्छिन्नाःसंतएवाभिव्यज्यंते तेषांजीवानांतत्तदहंकारावच्छेदेनैव सुखदुःखादिभोगोनान्यावच्छेदेनेति ॥ २८ ॥ हृदयेप्राणिनांस्थितइत्युक्तं तदेवहृदयशब्दस्यविवरणमाह ॥ मनोबुद्धिरिति ॥ मनइति बुद्धिरिति अहंकारइति चित्तमिति चतुष्टयमंतःकरणस्यैववृत्तिभेदाइत्याहुः । तत्रांतः

करणेप्रतिबिंबिता जीवाइत्युच्यंते॥ वृत्तिवृत्तिमतोरभेदविवक्षया मनोऽवच्छिन्ना बुद्ध्यवच्छिन्ना अहंकारावच्छिन्नाइति तत्रतत्रोच्यंते। अतोनानुपपत्तिः। अतएव "मनएवमनुष्याणांकारणंबंधमोक्षयोः॥ बुद्धेर्गुणेनात्मगुणेनचैवम्" इति। तथा "शोकहर्षभयक्रोधलोभमोहस्पृहादयः॥ अहंकारस्यदृश्यंतेजन्ममृत्युश्चनात्म

जीवत्वंप्राप्नुयुःकर्मफलभोक्तारएवते॥ त
तोवैषयिकंतेषांसुखंवादुःखमेववा॥३०॥ त
एवभुंजतेभोगायतनेऽस्मिञ्छरीरके॥३१॥

नः॥ सर्वंश्चित्तविलासोऽयम्" इत्यादिवाक्यानामेकवाक्यत्वंद्रष्टव्यम्॥२९॥ अंतःकरणेप्रतिबिंबिताजीवाःकर्मभोक्तारस्तएव वैषयिकंसुखंदुःखंवातेषामेव॥ ॥३०॥ तएवेति॥ तेषांव्यापकत्वेऽपि अस्मिन्भोगायतनेशरीरएवांतःकरणावच्छेदेन तएवसुखदुःखादिभुंजतइत्यर्थः॥३१॥ प्रसंगाद्भोगायतनभूतानांशरी

राणामवांतरविभागमाह ॥ स्थावरंजंगमंचेति ॥ स्थातुंशीलमस्यस्थावरं गम नहीनमित्यर्थः। जंगम्यतइतिजंगमम् । इत्थंवपुःशरीरंद्विविधम् । तत्रतयोर्भेदयो र्मध्येयेस्थावरादेहास्तेसूक्ष्माअतिमंदाइत्यर्थः ॥ केतेगुल्मलतादयः ॥३२॥ जंग मानाह ॥ अंडजाइति ॥ अंडेभ्योजाताअंडजाःपक्षिसर्पादयश्च। स्वेदजामशका

स्थावरंजंगमंचेतिद्विविधंवपुरुच्यते ॥ स्थाव
रास्तत्रदेहाःस्युःसूक्ष्मागुल्मलतादयः ॥३२॥ अं
डजाःस्वेदजास्तद्वदुद्भिज्जाइतिजंगमाः ॥ ३३ ॥

दयः। उद्भिदंतिभूमिमित्युद्भिदः तादृशाःसंतोयेजायंतेतउद्भिज्जाःपिपीलिकादयः। यद्वाजरायुमुद्भिद्यजायंतइत्युद्भिज्जा जरायुजाइत्यर्थः। अयमेवार्थःसाधुः। "उ द्भिदायजेतपशुकामः" इत्यत्रलक्षणादोषप्रसक्तौ उद्भिच्छब्दोयागनामधेयमित्यु क्तं तद्वज्जरायुजनामधेयमितिज्ञेयम् ॥ ३३ ॥ एवंनानाविधदेहप्राप्तौनियमकमा

ह ॥ योनिमिति ॥ देहिनः केनचित्पुण्येन शरीरत्वाय शरीरसंबंधार्थं योनिं स्त्रीगर्भं प्रपद्यंते। अन्येतु पापविशेषेण स्थाणुं स्थाणुप्रभृतिदेहं प्रपद्यंत इति। तत्र नियामकमाह। यथाकर्म पुण्यापुण्यरूपं तदनतिक्रम्य । यथाश्रुतम् वेदशास्त्राध्ययनसंस्कारमनतिक्रम्येत्यर्थः ॥३४॥ ननु शरीरत्वाविशेषबिंबीभूतेश्वरस्यापि भोगः स्या

योनिमन्ये प्रपद्यंते शरीरत्वाय देहिनः ॥ स्थाणुमन्ये प्रपद्यंते यथाकर्म यथाश्रुतम् ॥ ३४ ॥ सुख्यहं दुःख्यहं चेति जीव एवाभिमन्यते ॥ निर्लेपोऽपि परंज्योतिर्मोहितः शंभुमायया ॥ ३५ ॥

त्। शरीरस्य भोगायतनत्वात्। कारणे सति कार्यस्यावश्यकत्वादित्यत आह ॥ सुख्यहमिति ॥ यद्यपि जीवो निर्लेपः सुखदुःखादिसंगरहितः परंज्योतिः स्वप्रकाशस्तथापि शंभुमायया मोहितः सन् सुख्यहं दुःख्यहमिति स एवाभिमन्यते। अहंकारसमसत्ताकं सुखादिकमहंकारावच्छिन्नस्य प्रतिबिंबस्यैव नेश्वरस्य तथाच श्रुतिः।

"परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच" इत्यादि । नहियस्य मायातमेववशीकरोतीतिलोकेऐंद्रजालिकादौदृष्टमितिभावः ॥३५॥ कामक्रोधाद यस्त्वहंकारनिबंधनाइत्याह ॥ कामेति ॥ कामोऽभिलाषःक्रोधोद्वेषःलोभःप्राप्ते ऽपिनालंबुद्धिःमदःस्तंभः मात्सर्यंपरगुणासहनम् । मोहश्चाविवेकः॥ इममरिषड्व

कामःक्रोधस्तथालोभोमदोमात्सर्यमेवच॥ मोहश्चेत्यरिषड्व र्गमहंकारगतंविदुः॥ ३६ ॥ सएवबद्धयतेजीवःस्वप्नजाग्रदव स्थयोः ॥ सुषुप्तौतदभावाच्चजीवः शंकरतांगतः ॥ ३७ ॥

र्गमहंकारनिष्ठंविदुः । कामःसंकल्पइतिश्रुत्यांतःकरणस्यैतेवृत्तिविशेषास्तथापि अहंकारस्यप्राधान्येनोक्तमहंकारगतमिति ॥ ३६ ॥ सइति ॥ सएवजीवःस्वप्न जाग्रदवस्थयोरहंकारावच्छिन्नएवबध्यते । सुषुप्तौतदभावादहंकाराभावात् । सू क्ष्मरूपेणावस्थानादित्यर्थः । अन्यथाहंकारनाशेजीवोब्रह्मैवस्यात् । शंकरतांबिंब

साम्यंगतःप्राप्तोभवतीत्यर्थः "सतासौम्यतदासंपन्नोभवति" इत्यादिश्रुतेः॥३७॥
ननुजीवस्याहंकाराद्युपादानतया ब्रह्मणश्चवियदाद्युपादानतया तयोःसविकार तापत्तिरित्याशंक्य परिणामित्वेह्येवंस्यात् । इहतुविवर्ताधिष्ठानेनायंदोषइत्याह ॥ सएवेति ॥ जीवोमाययापरिणामिन्यास्पृष्टः । कोऽर्थःमायापरिणामोंऽतःकरणंतेनविशिष्टःसन्सुखदुःखभाग्भवति । तेनांतःकरणेनोपहितःसन् सुख

सएवमाययास्पृष्टःकारणंसुखदुःखयोः ॥ शुक्तौरजतवद्विश्वंमाय याद्दृश्यतेशिवे ॥३८॥ ततोविवेकज्ञानेननकोऽप्यत्रास्तिदुःखभाक् ॥

दुःखयोःकारणमधिष्ठानंभवतीतिभेदः । शिवेतुविशेषः । शिवेब्रह्मणिविश्वंमायया दृश्यते शुक्तौरजतवत् । तथा जीवस्य सुखदुःखाधिष्ठानत्वमहंकारावच्छिन्नत्वाद्भोक्तृत्वंचोपपद्यते । ईश्वरेतुविवर्ताधिष्ठानत्वेननकोऽपिसुखदुःखादिसंबंधइतिभावः ॥३८॥ ततइति ॥ ततआत्मनोऽसंगत्वादहंकारादेरध्यस्तत्वाच्च ममसुखदुःखादि

संबंधोनास्तीत्येवंरूपेणविवेकपूर्वकज्ञानेनकोऽप्यत्रसंसारेदुःखभाङ्नास्ति। तस्मात्त्वंमुधाऽव्यर्थंकिंपरितप्यसे। दुःखंत्यजेत्यर्थः ॥३९॥ भवदुक्तरीत्याजडस्यसर्वस्य मिथ्यात्वेऽपि आत्मनोऽसंगत्वेऽपिनिश्चिते तथापिशोकोनापसर्पति तत्किमित्या

ततोविरमदुःखात्त्वंकिंमुधापरितप्यसे ॥ ३९ ॥ श्रीराम उवाच ॥ मुनेसर्वमिदंसत्यंयन्मदग्रेत्वयेरितम् ॥ तथापिन जहात्येतत्प्रारब्धादृष्टमुल्बणम् ॥ ४० ॥ मत्तंकुर्याद्यथामद्यं नष्टाविद्यमपिद्विजम् ॥ तद्वत्प्रारब्धभोगोऽपिनजहातिविवेकिनम् ॥ ४१ ॥ ततःकिंबहुनोक्तेनप्रारब्धःसशिवःस्मरः ॥

शयेन श्रीरामउ०॥ मुनेइति ॥ स्पष्टम्। तथाप्येतद्भुज्यमानफलंप्रारब्धंचतददृष्टंचतत्। उल्बणमपरिहार्यत्वात्प्रबलम्। मांनजहाति ॥४०॥ मत्तमिति ॥ नष्टाअविद्याऽज्ञानंयस्यसतंतादृशमपि। दार्ष्टांतिकमाह ॥ तद्वदिति ॥ ४१ ॥ ततइति ॥

बहुनायुक्तायुक्तविचारेणाकिं नकिंचित्फलमित्यर्थः । प्रारब्धस्यजडत्वात्प्रारब्धप्रे रकःशिवएव । “ फलमतउपपत्तेः ” इत्यधिकरणेषुतथैवप्रतिपादनात् । तथा चशिवएवमांदिवारात्रमहंकारानुप्रविष्टःसन्बाधते । दुःखितेमनसिसर्वमसह्यमि तिन्यायेनदुःखितमनस्केमयित्वदुपदेशोनस्थेमानंधत्तइति भावः ॥ ४२ ॥ ननु निरंतरंश्रवणमननादिभिर्ब्रह्मानुसंधानेकृते संसारानर्थनिवृत्त्यावाप्तब्रह्मानंदोभ

बाधतेमांदिवारात्रमहंकारोऽपिताद्दृशः ॥४२॥
अत्यंतपीडितोजीवःस्थूलदेहंविमुंचति ॥

विष्यतीतिचेत् । “ बहूनांजन्मनामंतेज्ञानवान्मांप्रपद्यते ” इतिबहुजन्मसाध्ये नसाक्षात्कारेणपरिहरणीयेसंसारे कथंझटितिपरोक्षज्ञानमात्रेणसमस्तदुःखनि वृत्तिःस्यादित्याशयमाविष्कुर्वन्नाह ॥ अत्यंतेति ॥ कुलजातिगुणक्रियाजन्यैरहं कारममकारादिभिरत्यंतपीडितोजीवोलिंगशरीरंस्थूलदेहंविमुंचति त्यक्ष्यतीत्य

र्थः। "वर्तमानसामीप्येवर्तमानवद्वा" इतिभविष्यत्यपिवर्तमानसामीप्येलट्। त
स्माद्धेतोःजीवाप्तयेलिंगशरीरस्थैर्याय। मह्यंमदर्थं उपायोयत्नःक्रियतांभवतेति
शेषः। अत्रेदमाकूतम्। ब्रह्मविष्णुशिवानामभेदेऽपिकदाचिच्छिवोविष्णुंविष्णुः
शिवं तावुभौकदाचिद्ब्रह्माणंकदाचिद्ब्रह्माचतावुपदिशति। इदंतेषांलीलामात्रम्।

तस्माज्जीवाप्तयेमह्यमुपायःक्रियतांद्विज ॥ ४३ ॥ इतिश्रीपद्मपु
राणेउपरिभागेशिवगीतासूपनिषत्सु ब्रह्मविद्यायांयोगशास्त्रे
अगस्त्यराघवसंवादेवैराग्योपदेशोनामद्वितीयोऽध्यायः॥ २ ॥

अनावृतज्ञानस्येश्वरस्यमोहानुपपत्तेः। अतएव "हिरण्यगर्भःसमवर्तताग्रेभूत
स्यजातःपतिरेकआसीत्॥सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम"।
"नारायणएवाग्रआसीन्नब्रह्मानचशंकरः॥ जनितेंद्रस्यजनितातद्विष्णोः" इत्या
दिश्रुतीनां नहिनिंदान्यायेनलीलाविग्रहविशेषप्रशंसापरत्वमेवतात्पर्यंज्ञातव्य

म् । रामस्यशोकादिकंतदप्यज्ञजनानुकरणमात्रमभियुक्तान्प्रत्युपदेशमाहात्म्यं चगुरोःप्रकथितुमितिदिक् ॥४३॥ इतिश्रीलक्ष्मीन०शिव०टी०द्वितीयोऽध्यायः २
श्रीरामंनिमित्तीकृत्यपरमपुरुषार्थसाधनेउपदिष्टेऽपि तद्विमुखोबहिर्मुखोलोको नांतर्मुखतांलभतइति लोकस्थितिरौत्सर्गिक्येवमेवेत्याशयेनागस्त्यउवाच ॥ न गृण्हातीति ॥ कामक्रोधादिभिर्बहिर्मुखोगुरूपदिष्टंवचःपथ्यमपि परिणामे

॥ अगस्त्यउवाच ॥ नगृण्हातिवचःपथ्यंकामक्रोधादि
पीडितः ॥ हितंनरोचतेतस्यमुमूर्षोरिवभेषजम् ॥ १ ॥

ऽमृतमपि । अतएवहितमिष्टकारिनगृण्हाति । दैववशाद्गृहीतमपि तस्यतस्माइत्यर्थः । नरोचते । दृष्टांतमाह ॥ मुमूर्षोरिति ॥ १ ॥ ननुज्ञानेमहाप्रयासोऽस्तीति मांप्रतिभाति । "त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गःसमोक्षकैः" इत्यमरः । त्रिवर्गस्तुसंपादनीयइतिरावणंहत्वासीतांप्राप्य त्रिवर्गएवानुष्ठेयइतिचेत्तत्रततोऽप्यधिकःप्र

यासोऽस्तीतिप्रतिपादयन्नाह ॥ मध्येसमुद्रमिति ॥ "पारेमध्येषष्ठ्यावा" इत्यव्ययीभावः। दैत्येनरक्षसामायिनाकपटिना ॥ २ ॥ तस्यप्रतापमाह ॥ बद्धयंत इति ॥ ताड्यंते । किंचेतिस्त्रीसौख्यमपितादृशमितिभावः ॥ ३ ॥ निष्कंटकं

मध्येसमुद्रंयानीतासीतादैत्येनमायिना ॥ आयास्यतिनर
श्रेष्ठसाकथंतवसंनिधिम् ॥ २ ॥ बद्ध्यंतेदेवताःसर्वाद्वारिम
र्कटयूथवत् ॥ किंचचामरधारिण्योयस्यसंतिसुरांगनाः॥३॥
भुंक्तेत्रिलोकीमखिलांयःशंभुवरदर्पितः ॥ निष्कंटकंतस्यज
यःकथंतवभविष्यति ॥ ४ ॥ इंद्रजिन्नामपुत्रोयस्तस्यास्ती
शवरोद्धतः ॥ तस्याग्रेसंगरेदेवाबहुवारंपलायिताः ॥ ५ ॥

निःसपत्नम्। अभेदविवक्षयाशंभुर्ब्रह्माशिवश्चतयोर्वरेणदर्पितोगर्वितः। तस्यरावणस्यत्वत्कर्तृकस्तत्कर्मकोजयइत्यर्थः ॥ ४ ॥ इंद्रजिदिति ॥ ईशवरेणोद्धतो

गर्वितः । पलायिताःपलायनंकृतवंतइत्यर्थः ॥ ५ ॥ कुंभकर्णेति ॥ सुरसूदनोदे
वानांक्षोभकः। अन्यःकुंभकर्णादपरोविभीषणः। चिरंजीवीतिभाविवरदानेनोक्तम्
॥ ६ ॥ दुर्गमिति ॥ दुर्गंजलेविषमस्थानम्। दुर्जयंजेतुमशक्यम् । चत्वारिअं

कुंभकर्णाख्योभ्रातायस्यास्तिसुरसूदनः॥ अन्योदि
व्यास्त्रसंयुक्तश्चिरंजीवीविभीषणः ॥६॥ दुर्गंयस्या
स्तिलंकाख्यंदुर्जयंदेवदानवैः ॥ चतुरंगबलंयस्यवर्त
तेकोटिसंख्यया ॥७॥ एकाकिनात्वयाजेयःसकथंनृ
पनंदन ॥ आकांक्षतेकरेधर्तुंबालश्चंद्रमसंयथा ॥ ८ ॥

गानि हस्त्यश्वरथपदातिरूपाणियस्यतत्तथाबलंसैन्यं कोटिसंख्ययाउपलक्षि
तंसद्वर्तते । कोट्यइत्येवगणनीयंनतुकोटिमात्रेणपरिच्छेद्यमित्यर्थः ॥ ७ ॥ एका
किनेति ॥ असहायेनसप्रतिपक्षोरावणःससहायःकथंकेनप्रकारेणजेयः । त्वदु

द्योगस्त्वंकिंचित्करइत्याह । आकांक्षतइति ॥ यथाबालश्चंद्रमसंकरेधर्तुमाकांक्षते तथात्वंकाममोहेनकामप्रयुक्ताविवेकेनेत्यर्थः ॥ ८ ॥ तस्यरावणस्य ॥ ९ ॥ नाहंज्ञानाधिकारीवैराग्याभावादितिलोकरीतिंविडंबयन् श्रीरामउवाच ॥ अन्येनान्यस्यबलाद्भार्यापहृताचेत्तंदस्युंहत्वातस्यभार्याविमोक्षणीयाकिमुतस्वस्य । यतः

तथात्वंकाममोहेनजयंतस्याभिवांछसि ॥९॥ श्रीरामउवाच
क्षत्रियोऽहंमुनिश्रेष्ठभार्यामेरक्षसाहृता ॥ यदितंननिहन्म्याशुजीवनेमेऽस्तिकिंफलम् ॥१०॥ अतस्तेतत्त्वबोधेननमेकिंचित्प्रयोजनम् ॥ कामक्रोधादयःसर्वेदहतेतैस्तनुर्मम ॥११॥

क्षत्रियोऽहंक्षतात्रायतइतिक्षत्रियः । यदितंरावणमाशुशीघ्रंनहन्मितदाममजीवने किंफलमस्ति । सवाहंतव्योमयावामर्तव्यमितिभावः ॥ १० ॥ अतइति ॥ तेतत्त्वबोधेन । तेत्वयाक्रियमाणेनोपदेशेनेत्यर्थः । मेकिमपिप्रयोजनंनास्ति । कामक्रो

धादयोयेसर्वेरजस्तमोविकारास्तैः। तनुर्देहः॥११॥किंच॥अहंकारइति॥ क्षत्रियो
हमित्यादिगर्वोऽपि मेममजीवनंप्राणधारणं हंतुमुद्यतस्तस्मादलंश्रवणादिनेति
भावः ॥ १२ ॥ ननुविषयदोषदर्शनेनविरक्तःसन् श्रवणादिकुर्यात्। विरक्तस्यैव
तत्त्वबुभुत्सायामधिकारइतिचेन्नेत्याह ॥ हृतायामिति ॥ निजकांतायांशत्रुणाह

अहंकारोऽपिमेनित्यंजीवनंहंतुमुद्यतः ॥ १२॥ हृतायांनिजकां
तायांशत्रुणाऽवमतस्यवा ॥ यस्यतत्त्वबुभुत्सास्यात्सलोकेपुरु
षाधमः ॥ १३ ॥ तस्मात्तस्यवधोपायंलंघयित्वांबुधिंरणे ॥

तायांसत्यांवा शत्रुणा अवमतस्यतिरस्कृतस्ययस्यतत्त्वबुभुत्सातत्त्वंबोद्धुमिच्छा
स्यात्सलोकेपुरुषाधमः । देहादिष्वनित्याशुचिदुःखरूपत्वादिबुद्ध्यावैराग्यवत
एवमोक्षशास्त्रेऽधिकारः । अन्येतुप्रतिष्ठार्थंतच्छास्त्रंपठंतीतिरामोक्त्यासूचितम् ॥
॥ १३ ॥ तस्मादिति ॥ अंबुधिंलंघयित्वारणेतस्यरावणस्यवधेउपायंत्वत्तःत्वां

विनेत्यर्थः ॥ १४ ॥ यस्यतत्त्वज्ञानमुपदेष्टव्यमेवेतिनिश्चयस्तेनगुरुणापितच्छं दानुरोधेनवर्तितव्यमितिलौकिकींरीतिमनुसरन्नगस्त्यउवाच ॥ एवमिति ॥ एवं चेच्छत्रुवधएवावश्यंकर्तव्यश्चेत्तर्हि अव्ययमविनाशंपार्वतीपतिंशरणंयाहि । सन्न

ब्रूहिमेमुनिशार्दूलत्वत्तोनान्योऽस्तिमेगुरुः ॥१४॥ अगस्त्यउवाच
एवंचेच्छरणंयाहिपार्वतीपतिमव्ययम्॥सचेत्प्रसन्नोभगवान्वांछि
तार्थंप्रयच्छति ॥१५॥ देवैरजेयःशक्राद्यैर्हरिणाब्रह्मणापिवा ॥ सते
वध्यःकथंवास्याच्छंकरानुग्रहंविना॥१६॥अतस्त्वांदीक्षयिष्यामि
विरजागममाश्रितः॥ तेनमार्गेणमर्त्यत्वंहित्वातेजोमयोभव॥१७॥

सन्नश्चेत्तर्हि ॥ १५ ॥ त्वयैवप्रसादःक्रियतामितिचेत्तत्राह ॥ देवैरिति ॥ तेत्वया वध्यःहंतुंशक्यःकथंकेनप्रकारेण ॥ १६ ॥ अतइति ॥ विरजागमंविरजादीक्षा प्रतिपादकंशास्त्रमाश्रितःसन्दीक्षयिष्यामिदीक्षावंतंकरिष्यामीत्यर्थः । तेनमार्गे

णोपायेनमर्त्यत्वमितरसाधारण्यंहित्वा । तेजोमयःशुद्धदेहोभव । आशिषिलोट्
॥ १७ ॥ येनेति ॥ येनदीक्षासंस्कारेणशत्रून्हत्वासर्वान्कामानवाप्स्यसि । किंच
भूमंडलंभुक्त्वानुभूयांतेशिवसायुज्यमपरमुक्तिंप्राप्स्यसि ॥ उपासनाभिर्मुक्तय

येनहत्वारणेशत्रून्सर्वान्कामानवाप्स्यसि॥भुक्त्वाभूमंडलंचांतेशिव
सायुज्यमाप्स्यसि ॥ १८॥ सूतउवाच ॥ अथप्रणम्यरामस्तंदंडवन्मु
निसत्तमम् ॥ उवाचदुःखनिर्मुक्तःप्रहृष्टेनांतरात्मना ॥ १९ ॥ श्रीराम
उवाच ॥ कृतार्थोऽहंमुनेजातोवांछितार्थोममागतः॥ पीतांबुधिःप्रसन्न
स्त्वंयदिमेकिमुदुर्लभम् ॥ अतस्त्वंविरजादीक्षांब्रूहिमेमुनिसत्तम २०

स्तुसारूप्यादयएवभवंति ज्ञानेनकैवल्यरूपामुक्तिरितिभावः ॥ १८ ॥ सूतउवा
च ॥ अथेति ॥ अगस्त्यवाक्यश्रवणानंतरम् ॥ १९ ॥ कृतार्थइति ॥ आगतः
सिद्धः । तस्यमाहात्म्यमाह ॥ पीतांबुधिरिति ॥ चुलकितासिंधुः । तवानुग्रहेस

तिसिंधुतरणादिकंसर्वंमदिष्टंसेत्स्यतीतिभावः ॥ अतइति ॥ यतःशिवप्रसादहे तुर्दीक्षा। अतःकारणादित्यर्थः॥ २० ॥ अगस्त्यउवाच ॥ शुक्लपक्षइति ॥ यस्मि न्कस्मिन्वामासेशुक्लपक्षेचतुर्दश्याद्युक्ततिथिषु आर्द्रायुक्तसोमवारेवा दीक्षांसमा रभेत्। परस्मैपदमार्षम् ॥ २१ ॥ यमिति ॥ यंदेवमित्थमाहुस्तंध्यात्वाव्रतंचरे

अगस्त्यउवाच ॥ शुक्लपक्षेचतुर्दश्यामष्टम्यांवाविशेषतः ॥
एकादश्यांसोमवारेआर्द्रायांवासमारभेत् ॥ २१ ॥ यंवाम
माहुर्यंरुद्रंशाश्वतंपरमेश्वरम्॥ परात्परंपरंचाहुःपरात्परतरं
शिवम्॥ब्रह्मणोजनकंविष्णोर्वन्हेर्वायोःसदाशिवम् ॥२२॥

दितिवक्ष्यमाणेनान्वयः॥ वामंसुंदरंश्रेष्ठंवा। रुद्रंरुदंतीतिरुदःसंसारिणस्तान्रा तिकृपयानुगृण्हातीतिरुद्रस्तं परात्परंजगन्नियंतारम्। परात्परतरंब्रह्मादिवंद्यम्। ब्रह्मविष्ण्वादिवाच्यानांसकललीलाविग्रहाणांमूलभूतमित्यर्थः। "इंद्रोमायाभिः

पुरुरूपईयते" इत्यादिश्रुतेः । अतएवसदाशिवंपूर्णानंदात्मनाव्यवस्थितम्
॥ २२ ॥ ध्यात्वेति ॥ एवंविधंशिवंध्यात्वेतिपूर्वागमनेनोक्तंभवति । भूतशुद्धि
प्रकारमाह ॥ ध्यात्वेत्यादिना ॥ अग्निनाग्निबीजेनेत्यर्थः । आवसथ्याग्निंध्यात्वापं
चभूतानिस्वदेहारंभकाणिपृथक्पृथक् वायुबीजेनविशोध्यविशोषयित्वा तानिपं

ध्यात्वाग्निनावसथ्याग्निंविशोध्यचपृथक्पृथक् ॥ पंचभूतानिसं
यम्यदग्ध्वागुणविधिक्रमात् ॥ २३ ॥ मात्राःपंचचतस्रश्चत्रिमात्रा
द्विस्ततःपरम् ॥ एकमात्रममात्रंचद्वादशांतव्यवस्थितम् ॥ २४ ॥

चभूतानिसंयम्यावसथ्याग्निनागुणविधिक्रमाच्छब्ददिगुणपूर्वकंतेनक्रमेणेत्यर्थः।
दग्ध्वाध्यात्वास्वस्वगुणपूर्वकंतानिभूतानिदग्धानीतिभावयित्वेत्यर्थः॥२३॥ तमे
वक्रमंस्फुटमाह ॥मात्राइति॥ रूपरसगंधस्पर्शशब्दतन्मात्राइत्यर्थः। अयंभावः।
पृथिवीपंचमात्रा। आपश्चतुर्मात्राः।तेजस्त्रिमात्रम्।वायुर्द्विमात्रः।आकाशएकमात्र

इति । तथाचपूर्वपूर्वस्योत्तरोत्तरंप्रत्युपादानतयातदीयानांगुणानामप्युत्तरोत्तरम
न्वयादितिभावः। अमात्रमिति॥अहंकारमहत्तत्वमायानामेकतत्वेनग्रहणंतच्चामा
त्रम्। अव्यक्तगुणभेदत्वाद्रूपादितन्मात्ररहितामित्यर्थः। तत्कीदृशं द्वादशांतव्यव
स्थितंपंचतन्मात्ररूपाःशब्दादयःपंचमहाभूतानि अहंकारमहत्तत्वमायाख्यमेकं
एवमेकादशतत्वानि एषामाधारःपरमात्माद्वादशः । सएवांतोलयावधिरितिद्वा

स्थित्यांस्थाप्यामृतोभूत्वा व्रतंपाशुपतंचरे
त् ॥२५॥ इदंव्रतंपाशुपतंकरिष्यामिसमासतः॥

दशांतस्तस्मिन्व्यवस्थितंप्रविलापेनावस्थितंध्यात्वेत्यर्थः ॥२४॥ स्थित्यांस्था
प्येति॥ तदनंतरममृतबीजेनतद्ध्यानपूर्वकंपुनःसर्वलयाधाराद्ब्रह्मणःसृष्टिक्रमेण
पंचीकरणपूर्वकंपूर्ववद्देहस्थित्यां तानितत्वान्यवस्थाप्य अमृतोभूत्वादिव्यदेहोभू
त्वेत्यर्थः ॥ पाशुपतंव्रतंचरेदितिभूतशुद्धिप्रकारउदाहृतः॥ २५ ॥ इदंव्रतमिति॥

समासतः संक्षेपेणसंकल्प्यसंकल्पंकृत्वा स्वशाखयास्वशाखोक्तविधिनाग्निंप्रति
ष्ठाप्येत्यर्थः ॥ २६ ॥ उपोषितइति ॥ स्पष्टम् ॥ २७ ॥ जुहुयादिति ॥ ततस्त
दनंतरं एकाग्रःस्वस्थःसन् समिदाज्यचरूनितिद्रव्यत्रयं पृथक्पृथगनुवाकांतं

प्रातरेवतुसंकल्प्यनिधायाग्निंस्वशाखया ॥ २६ ॥ उपोषितःशुचिः
स्नातःशुक्लांबरधरःस्वयम् ॥ शुक्लयज्ञोपवीतश्चशुक्लमाल्यानुलेपनः
॥ २७ ॥ जुहुयाद्विरजोमंत्रैःप्राणापानादिभिस्ततः ॥ अनुवाकांतमे
काग्रःसमिदाज्यचरून्पृथक् ॥ २८ ॥ आत्मन्यग्निंसमारोप्ययातेअ
ग्नेतिमंत्रतः ॥ भस्मादायाग्निरित्याद्यैर्विमृज्यांगानिसंस्पृशेत् २९

अनुवाकसमाप्तिपर्यंतंजुहुयात् । "प्राणापानव्यानोदानसमानामेशुद्ध्यंताम् ।
ज्योतिरहंविरजाविपाप्माभूयासꣳस्वाहा " इत्यादयो विरजामंत्राअनुसंधेयाः
॥ २८ ॥ आत्मनीति ॥ "यातेअग्नेयज्ञियातनूः" इत्यादिमंत्रेणाग्निमात्मनि

समारोप्य। ततोहुतस्याग्नेर्भस्मादायगृहीत्वा "अग्निरितिभस्म" इत्यादिमंत्रैर्विमृज्यअभिमंत्र्य तेनभस्मनांगानिललाटादीनिसंस्पृशेत् । तेषुभस्मधारयेदित्यर्थः । अग्नइतिवक्तव्ये अग्नेतिसंधिरार्षः । "अग्निरित्यादिभिर्मंत्रैः शुद्धंभस्माभिमंत्रितम्॥ शिवमंत्रेणवाधार्यंगायत्र्याप्रणवेनवा॥" एतच्चभस्मधारणंसर्वकर्मांगम्।

भस्मच्छन्नोद्विजोविद्वान्महापातकसंभवैः ॥ पापैर्विमुच्यते नित्यंमुच्यतेनचसंशयः॥३०॥ अग्निवीर्यंयतोभस्मवीर्यवान्भस्मसंयुतः॥ भस्मस्नानरतोविप्रोभस्मशायीजितेंद्रियः॥३१॥

"नतद्ध्याननंतद्दानंनतज्ज्ञानंजपोनसः॥ त्रिपुंड्रेनविनायेनविप्रेणयदनुष्ठितम्" इति । विस्तरस्त्वाकरेद्रष्टव्यः ॥ २९ ॥ भस्मेति ॥ छन्नोलिप्तांगआदौपापैर्विमुच्यते ततोज्ञानेनसंसारादपिमुच्यते ॥ नसंशयइति ॥ महापापेभ्यःकथंप्रमुच्यतइतिसंशयोनकार्यः । भस्मसामर्थ्यंवाचामगोचरमितिभावः ॥ ३० ॥ ३१ ॥

एवंकुर्विति ॥ एवंप्रागुक्तरीत्याभस्मधारणंकुर्वित्यर्थः ॥ ३२ ॥ इदमिति ॥ इदंबु द्धिस्थंसर्वंसर्वार्थप्रयोजनम् ॥ ३३ ॥ सूतउ० ॥ इत्युक्त्वेति ॥ वेदसारइत्याख्याना मास्येति ॥ ३४ ॥ उक्तंचेति ॥ तेनागस्त्येनउक्तंच । किमुक्तंतदेवाह ॥ हेराम

सर्वपापविनिर्मुक्तःशिवसायुज्यमाप्नुयात् ॥ एवंकुरुमहाराज
शिवनामसहस्रकम् ॥ ३२ ॥ इदंतुसंप्रदास्यामितेनसर्वमवाप्स्यसि
॥ ३३ ॥ सूतउवाच ॥ इत्युक्त्वाप्रददौतस्मैशिवनामसहस्रकम् ॥
वेदसाराभिधंनित्यंशिवप्रत्यक्षकारकम् ॥ ३४ ॥ उक्तंचतेनराम
त्वंजपनित्यंदिवानिशम् ॥ ततः प्रसन्नोभगवान्महापाशुप
तास्त्रकम् ॥ तुभ्यंदास्यतितेनत्वंशत्रून्हत्वाप्स्यसिप्रियाम् ॥ ३५ ॥

दिवानिशंइदंजप तदपिनकस्मिंश्चिदहोरात्रेकिंतुसर्वेष्वित्याह ॥ नित्यमिति ॥ ततः सहस्रनामजपात्पाशुपतसंज्ञकमस्त्रं तेनास्त्रेणरावणादीन्हत्वाप्रियांभार्यामवा

प्स्यासि ॥ ३५ ॥ तस्यैवेति ॥ संहारेति । संहारेतदेवास्त्रंप्रायेणार्हमित्यर्थः ॥३६॥
तदलाभइति ॥ कर्तुःशेषत्वाविवक्षायांतवेतिषष्ठी तेननलोकेतिननिषेधः । उपसं



तस्यैवास्त्रस्यमाहात्म्यात्समुद्रंशोषयिष्यसि ॥ संहारकालेजगता
मस्त्रंतत्पार्वतीपतेः ॥ ३६ ॥ तदलाभेदानवानांजयस्तवसुदुर्लभः ॥
तस्माल्लब्धुंतदेवास्त्रंशरणंयाहिशंकरम् ॥ ३७॥ इतिश्रीपद्मपुराणे
शिवगीतायामगस्तिराघवसंवादे विरजादीक्षानिरूपणंनामतृती
योऽध्यायः ॥ ३ ॥ श्रीसूतउवाच॥ एवमुक्त्वामुनिश्रेष्ठेगतेतस्मि
न्निजाश्रमम् ॥ अथरामगिरौरामः पुण्येगोदावरीतटे ॥ १ ॥

हरति ॥ तस्मादिति॥ ३७॥ इति श्रीशिवगीताटीकायां तृतीयो ऽध्यायः॥ ३ ॥
ततः किंवृत्तमितिशुश्रूषून्मुनीन्प्रति सूतउवाच ॥ एवमिति ॥ तस्मिन्नगस्त्ये ।

अथानंतरम् ॥ १ ॥ शिवलिंगमिति ॥ यथाविधिपूर्वाध्यायोक्तविधिमनतिक्र
म्यदीक्षांकृत्वास्थितइतिपंचमश्लोकस्थेनसहान्वयः । कीदृग्रामइत्याकांक्षायांवि
शेषणानिभूतिभूषितेत्यादिति॥२॥ अभिषिच्येति ॥ स्वयंप्रतिष्ठापितंलिंगंगौत

शिवलिंगंप्रतिष्ठाप्यकृत्वादीक्षांयथाविधि ॥ भूतिभूषि
तसर्वांगोरुद्राक्षाभरणैर्युतः ॥ २ ॥ अभिषिच्यजलैःपु
ण्यैर्गौतमीसिंधुसंभवैः ॥ अर्चयित्वावन्यपुष्पैस्तद्वद्वन्य
फलैरपि ॥३॥ भस्मच्छन्नोभस्मशायीव्याघ्रचर्मासनेस्थि
तः ॥ नाम्नांसहस्रंप्रजपन्नक्तंदिवमनन्यधीः ॥ ४ ॥

मीगोदावरीसासिंधुर्नदीतत्प्रभवैर्जलैरभिषिच्य । वन्यानिवनेजातानितैःस्पष्ट
मन्यत् ॥ ३ ॥ भस्मच्छन्नइति ॥ भस्मनाछन्नोदिग्धः । नक्तंदिवमहोरात्रम् ।
अचतुरेतिनिपातनात्साधुः। अनन्यधीःनविद्यतेऽन्यस्मिन्धीर्यस्यसतथा शिवैक

निष्ठइत्यर्थः॥ ४ ॥ ५ ॥ शांतइति ॥ शांतोमनोनिग्रहवान् दांतोवहिरिंद्रियनिग्रहवान् । एवंनियमाविष्टःसन्महेश्वरंध्यायन् । कीदृशं हृत्पंकजइत्यादिभिर्विशिनष्टि ॥ ६॥ चतुर्भुजमिति ॥ विद्युत्तडित्तद्वत्पिंगानांजटानांधरम् । कोटिसंख्या

मासमेकंफलाहारोमासंपर्णाशनःस्थितः ॥ मासमेकंजलाहारोमासंचपवनाशनः ॥५॥ शांतोदांतःप्रसन्नात्माध्यायन्नेवं महेश्वरम् ॥ हृत्पंकजेसमासीनमुमादेहार्धधारिणम् ॥ ६ ॥ चतुर्भुजंत्रिनयनंविद्युत्पिंगजटाधरम् ॥ कोटिसूर्यप्रतीकाशं चंद्रकोटिसुशीतलम् ॥ ७ ॥ सर्वाभरणसंयुक्तंनागयज्ञोपवीतिनम् ॥ व्याघ्रचर्मांबरधरंवरदाभयधारिणम् ॥ ८ ॥

काःसूर्यास्तैःसदृशमित्यर्थः ॥७॥ सर्वाभरणमिति ॥ नागएवयज्ञोपवीतंतदस्यास्तीतितिनम् । व्याघ्रचर्मैवांबरंतद्धरतीतितम् । वरदाभयमुद्रांकितौहस्तौधर्तुंशी

लमस्येतितम् ॥८॥ व्याघ्रेति ॥ त्रिशूलंचडमरुश्चत्रिशूलडमरूतौधरंधारयंतम्।
"कर्तृकर्मणोःकृति" इतिसूत्रेणकर्मणिषष्ठीतुनभवति। आर्षत्वाद्वा ॥ ९ ॥ नित्य
मिति॥ शाश्वतंशश्वदेकस्वभावम्। शुद्धंकल्पितधर्मरहितंध्रुवंपरिणामशून्यम्।
अक्षरंअपक्षयरहितंअव्ययंध्वंसाप्रतियोगिनंनित्यंप्रागभावाप्रतियोगिनंतथाच

व्याघ्रचर्मोत्तरीयंचसुरासुरनमस्कृतम् ॥ पंचवक्त्रंचंद्रमौलिंत्रिशूल
डमरूधरम् ॥ ९ ॥ नित्यंचशाश्वतंशुद्धंध्रुवमक्षरमव्ययम् ॥ एवंनि
त्यंप्रजपतोगतंमासचतुष्टयम् ॥१०॥ अथजातोमहानादःप्रलयां
बुधिभीषणः ॥ समुद्रमथनोद्भूतमंदरावनिभृद्ध्वनिः ॥ ११ ॥

षट्भावविकारहीनमितिभावः। एवंध्यायतःप्रजपतोरामस्यमासचतुष्टयंगतंअ
त्यगादित्यर्थः ॥१०॥ अथमासचतुष्टयानंतरम्। अंबुधिशब्देनतच्छब्दोलक्ष्यते।
तद्वद्भीषणः। समुद्रमथनेउद्भूतःपरिवर्तितोयोमंदरावनिभृन्मंदरगिरिस्तद्ध्वनिस

द्दशः ॥ ११ ॥ रुद्रेति ॥ रुद्रस्यबाणाग्निनासंदीप्तंभृशंसंदीप्तबहुलंत्रिपुरंतस्य योविभ्रमःमहासंरंभःतंकरोतीतितथाभूतोनादोजातइतिपूर्वेणान्वयः। तत्करोती तिण्यंतात्पचाद्यच् ॥ तमिति ॥ अथमहानादोत्पत्त्यनंतरंतंनादमाकर्ण्यश्रुत्वासं भ्रांतोजातः"समौसंवेगसंभ्रमौ"इत्यमरः। भयादिनाकर्मस्वपाटवंसंवेगइतिक्षी

रुद्रबाणाग्निसंदीप्तभृशत्रिपुरविभ्रमः ॥ तमाकर्ण्याथसंभ्रां
तोयावत्पश्यतिपुष्करम् ॥ तावदेवमहातेजोरामस्यासीत्पु
रोद्विजाः ॥ १२ ॥ तेजसातेनसंभ्रांतोनापश्यत्सदिशोद
श ॥ अंधीकृतेक्षणस्तूर्णंमोहंयातोनृपात्मजः ॥ १३ ॥

रस्वामी। यावत्पुष्करंगोदावरीजलंतत्रैवप्रक्रांतत्वात्। "पुष्करंसर्वतोमुखम्"इ त्यमरः । तज्जलंलक्षीकरोतितावत् ॥ १२ ॥ तेजसेति ॥ संभ्रांतोव्याकुलः । अंधीकृतेईक्षणेनेत्रेयस्यसतथा। एवंभूतःसन्तूर्णंशीघ्रंमोहंयातःप्राप्तः ॥ १३ ॥

विचिंत्येति ॥ हेद्विजेश्वराःशमोविचिंत्यमनसिविचार्य । एषादैत्यमायेत्यूहितवान् । अथमहावीरोरामः स्वकमात्मीयंधनुःसज्यंसगुणंकृत्वा ॥ १४ ॥ अविध्य

विचिंत्यतर्कयामासदैत्यमायांद्विजेश्वराः ॥ अथोत्थायमहावीरःसज्यंकृत्वाधनुःस्वकम् ॥ १४ ॥ अविध्यन्निशितैर्बाणैर्दिव्यास्त्रैरभिमंत्रितैः ॥ आग्नेयंवारुणंसौम्यंमोहनंसौरपार्वतम् ॥ १५ ॥ विष्णुचक्रंमहाचक्रंकालचक्रंचवैष्णवम् ॥ रौद्रंपाशुपतंब्राह्मंकौबेरंकुलिशानिलम् ॥१६॥ भार्गवादिबहून्यस्त्राण्ययंप्रायुंक्तराघवः॥१७॥ तस्मिंस्तेजसिशस्त्राणिचास्त्राण्यस्यमहीपतेः ॥ विलीनानिमहाभ्रस्यकरकाइवनीरधौ ॥ १८ ॥

दिति ॥ दिव्यास्त्राणि । तान्येवाह ॥ आग्नेयमिति ॥ तत्तद्देवताकान्यस्त्राणीत्यर्थः ॥ १५ ॥ प्रायुंक्तप्रयुक्तवानित्यर्थः ॥ १६ ॥ १७ ॥ तस्मिन्निति ॥ महाभ्रस्यम

हामेघस्यसंबंधिन्यःकरकावर्षोपलानीरधाविवेतिदृष्टांतः ॥१८॥ ततइति॥तस्य रामस्यकराच्च्युतंसज्जज्वाल । तथातूणीरंनिषंगः ॥ अंगुलित्राणंचगोधिकापि ज्याघातवारणार्थंकृतंचर्ममयंतलंचजज्वालेत्यनुषज्यते॥१९॥ तदिति॥ तत्तेजसा

ततःक्षणेनजज्वालधनुस्तस्यकराच्च्युतम् ॥ तूणीरंचांगुलित्राणंगो
धिकापिमहीपते॥ १९ ॥ तद्दृष्ट्वालक्ष्मणोभीतःपपातभुविमूर्छितः ॥
अथाकिंचित्करोरामोजानुभ्यामवनिंगतः ॥ २० ॥ मीलिताक्षोभ
याविष्टःशंकरंशरणंगतः ॥ स्वरेणाप्युच्चरन्नुच्चैःशंभोर्नामसहस्रक
म् ॥ २१ ॥ शिवंचदंडवद्भूमौप्रणनामपुनःपुनः ॥

धनुरादिज्वलनम्। अथानंतरंनकिंचित्करोतीत्यकिंचित्करःसन् ॥ २० ॥ मीलि ताक्षइति॥ शरणंरक्षितारंगतःप्राप्तः। किंकुर्वन् उच्चैःस्वरेणापिशंभोर्नामसहस्रकं उच्चरन्नुच्चारयन्नित्यर्थः ॥ २१॥ शिवंचेति ॥ पुनश्चेति । दिशांमंडलंस्वनन्स्वा

नयन्नित्यर्थः । अंतर्भावितण्यर्थाच्छतृप्रत्ययः । घोरंभयंकरंयथातथा ॥ २२ ॥
अथेति ॥ रामउन्मीलिताक्षःसन्शीतांशुश्चंद्रस्तद्वच्छीतलंतेजआदधदासमंता
द्बिभ्रत् । तथापियावत्स्वचक्षुर्ग्राह्यपरिमाणकंयथास्यात्तथा । सर्वस्यगृहीतुमश

पुनश्चपूर्ववच्चासीच्छब्दोदिङ्मंडलंस्वनन् ॥ चचाल
वसुधाघोरंपर्वताश्चचकंपिरे ॥२२॥ अथक्षणेनशीता
शुशीतलंतेजआदधत् ॥ उन्मीलिताक्षोरामस्तुया
वद्यावत्प्रपश्यति ॥२३॥ तावद्ददर्शवृषभंसर्वालंकार
संयुतम् ॥पीयूषमथनोद्भूतनवनीतस्यपिंडवत्॥२४॥

क्यत्वात् । यावत्प्रपश्यति । यद्वा । पूर्वोक्तंतेजआदधत्अपिबत्सादरमद्राक्षीदि
त्यर्थः । धेट्पाने"विभाषाधेट्श्व्योः"इतिचङ् । पुनश्चयावत्प्रपश्यतीति ॥२३॥
तावदिति॥तावद्वृषभंददर्श । पीयूषस्यामृतस्यमथनेनोद्भूतंयन्नवनीतंतस्यपिंडव

त्स्थितम् । अतिशुद्धत्वसूचनायेदमुक्तम् ॥ २४ ॥ प्रोतेति ॥ प्रोतंशृंगाग्रेख चितंस्वर्णंसुवर्णंयस्यतंतथोक्तंमरकतस्यछायाकांतिःतद्वत्कांतिर्यस्यतादृशेनशृंग द्वयेनांचितंरमणीयमित्यर्थः । नीलरत्नामिंद्रनीलमणिस्तद्वदीक्षणेयस्यतंऱ्हस्वे

प्रोतस्वर्णंमरकतच्छायाशृंगद्वयांचितम् ॥ नीलरत्ने
क्षणंऱ्हस्वकंठकंबलभूषितम् ॥ २५॥ रत्नपल्याणसं
युक्तंनिबद्धश्वेतचामरैः ॥ घंटिकाघर्घरीशब्दैःपूरयंतं
दिशोदश ॥२६॥तत्रासीनंमहादेवंशुद्धस्फटिकविग्रह
म्॥कोटिसूर्यप्रतीकाशंकोटिशीतांशुशीतलम्॥२७॥

नगलकंबलेनसास्नयाभूषितम् ॥ २५ ॥ रत्नेति ॥ पल्याणंपृष्ठास्तरणंतेनसं युक्तम्।घंटिकाःक्षुद्रघंटाःघर्घर्यस्तदवांतरभेदास्तासांशब्दैःदिशःपूरयंतम्॥२६॥ तत्रेति ॥ तत्रतस्मिन्पूर्वोक्तेवृषभेसमासीनंमहादेवं ददर्शरघुनंदनइतिवक्ष्यमाणे

नान्वयः ॥ २७ ॥२८॥ नीलकंठमिति ॥ नानाविधान्यायुधानितैरुद्धातितुंशीलं येषांतेतथोक्ताः तादृशादशसंख्याकाबाहवोयस्यतंतथोक्तम् । "सुप्यजातौ" इति सुब्ग्रहणंप्राग्देषुप्रवृत्त्यर्थंतस्मात्प्राद्युपपदेऽपिणिनिरितिकैय्यटः ॥२९॥ युवान

व्याघ्रचर्मांबरधरंनागयज्ञोपवीतिनम् ॥ सर्वालंकारसंयुक्तंविद्यु
त्पिंगजटाधरम् ॥२८॥ नीलकंठंव्याघ्रचर्मोत्तरीयंचंद्रशेखरम् ॥
नानाविधायुधोद्धासिदशबाहुंत्रिलोचनम् ॥ २९ ॥ युवानंपुरुष
श्रेष्ठंसच्चिदानंदविग्रहम् ॥ ३० ॥ तत्रैवचसुखासीनांपूर्णचंद्र
निभाननाम् ॥ नीलेंदीवरदामाभामुद्यन्मरकतप्रभाम् ॥ ३१ ॥

मिति ॥ पुरुषश्रेष्ठम् । "ईश्वरःसर्वभूतानाम्" इतिश्रुतेः । वास्तवस्वरूपमाह । सच्चिनानंदविग्रहमिति ॥ ३० ॥ तत्रैवेति ॥ पूर्ववद्वक्ष्यमाणेनान्वयः । नीलेंदीवराणांयद्दाममालातदाभांतत्सदृशीम् । अनेनपार्वत्याःकृष्णरूपत्वंसूचितम् ॥ तदु

क्तंमार्कंडेये । "कालिकेतिसमाख्याताहिमाचलकृताश्रया" इति । उद्यंतीमरकत प्रभेवप्रभायस्यास्ताम् ॥ ३१ ॥ मुक्तेति ॥ मुक्ताएवाभरणानितैःसंयुक्तांतारा भिराचितांव्याप्तांरात्रिमिवस्थितां विंध्यक्षितिधरवदुत्तुंगयोरुन्नतयोःकुचयोर्यो भारस्तस्ययोभरोऽतिशयस्तेनालसां मंदगतिमित्यर्थः । "अथातिशयोभरः" इ

मुक्ताभरणसंयुक्तांरात्रिंताराचितामिव॥विंध्यक्षितिधरोत्तुंगकुचभा रभरालसम् ॥ ३२ ॥ सदसत्संशयाविष्टमध्यदेशांतरांवराम् ॥ दि व्याभरणसंयुक्तांदिव्यगंधानुलेपनाम् ॥३३॥ दिव्यमाल्यांबरधरां नीलेंदीवरलोचनाम्॥अलकोद्भासिवदनांतांबूलग्रासशोभिताम्३४

त्यमरः ॥ ३२ ॥ सदसदिति ॥ अस्तिनवेत्येवंरूपेसंदेहआविष्टंविषयभूतंमध्य देशस्यांतरमवकाशोयस्यास्तां वरांसर्वोत्तमाम् ॥ ३३ ॥ दिव्येति ॥ दिव्यानां माल्यानामंबराणांचधरांधारयंतीम् । तांबूलस्यग्रासेनभक्षणेनशोभिताम् ।

ग्रसुअदनेघञ् । अलकैः कुंतलैरुद्भासितुंशीलमस्यतत्तथावदनंयस्यास्ताम् ॥
॥ ३४ ॥ शिवेति ॥ शिवस्यालिंगनेन संजातैःपुलकैरुद्भासितुंशीलंयस्यसतथा
भूतोविग्रहोदेहोयस्यास्तांसच्चिदानंदरूपाढ्यांतत्स्वरूपामित्यर्थः ॥ सच्चिदानंद
स्वरूपलक्षणेनाशिवशक्त्योरभेदःसूचितः।जगन्मातरंविवर्तोपादानभूतामित्यर्थः।

शिवालिंगनसंजातपुलकोद्भासिविग्रहाम् ॥ स
च्चिदानंदरूपाढयांजगन्मातरमंबिकाम् ॥ ३५ ॥
सौंदर्यसारसंदोहांददर्शरघुनंदनः ॥ स्वस्ववाह
नसंबद्धान्नानायुधलसत्करान् ॥ ३६ ॥

अतएवांबिकांजगज्जननीम् ॥३५॥ सौंदर्येति ॥ सौंदर्यसारस्यसंदोहोमेलनंय
स्यास्तां बहुव्रीहेर्विशेष्यनिघ्नत्वात्स्त्रीत्वं षष्ठीतत्पुरुषेतुपरवल्लिंगतयापुंस्त्वंस्यात्।
स्वस्ववाहनैरैरावतादिभिः संबद्धान्संयुक्तान्नानायुधैर्वज्रादिभिर्लसंतः करायेे

षांतान्॥३६॥बृहदिति॥ बृहद्रथंतरादिसामानि तद्वेदानित्यर्थः। स्वस्वकांताभिः स्त्रीभिःसंयुक्तान्परितःसमंतात्स्थितान्॥ ३७॥ अग्रगमिति॥ कालांबुजंनीलोत्पलम्। कालांबुदइतिवा। तत्सदृशम्। "कालश्यामलमेचकाः"इत्यमरः। वि

बृहद्रथंतरादीनिसामानिपरिगायतः॥ स्वस्वकांतासमायुक्तान्दिक्पालान्परितःस्थितान्॥३७॥अग्रगंगरुडारूढंशंखचक्रगदाधरम्॥कालाबुजप्रतीकाशंविद्युत्कांतश्रियायुतम्॥ ३८॥ जपंतमेकमनसारुद्राध्यायंजनार्दनम्॥ पश्चाच्चतुर्मुखंदेवंब्रह्माणंहंसवाहनम्॥३९॥ चतुर्वक्त्रैश्चतुर्वेदरुद्रसूक्तैर्महेश्वरम्॥ स्तुवंतंभारतीयुक्तंदीर्घकूर्चंजटाधरम्॥४०॥

द्युत्तडित्तद्वत्कांतास्फुरंतीयाश्रीःतयायुतंयुक्तम्। अनेनविशेषणेनकालांबुदसादृश्यमेवोचितमितिप्रतीयते॥ ३८॥ जपंतमिति॥ रुद्राध्यायं"नमस्तेरुद्रमन्यव" इतिप्रसिद्धम्॥ ३९॥ चतुर्वक्त्रैरिति॥ चतुर्भिर्वक्त्रैःचतुर्षुवेदेषुयानिरुद्रसू

क्तानितैः भारतीसरस्वतीतयायुक्तंतथोक्तं दीर्घाःकूर्चाःश्मश्रूणियस्यतम्।"कूर्चो विकथनेमध्येभ्रुवोःश्मश्रुणिकैरवे" इतिविश्वः। जटानांधरम् ॥४०॥ अथर्वेति॥ अथर्वशिरसाउपनिषद्विशेषेणेत्यर्थः। देवंमहादेवंमुनीनांमंडलम्। मंडलशब्द

अथर्वशिरसादेवंस्तुवंतंमुनिमंडलम्॥ गंगादितटिनीयु
क्तमंबुधिंनीलविग्रहम् ॥ ४१ ॥ श्वेताश्वतरमंत्रेणस्तुवं
तंगिरिजापतिम् ॥ अनंतादिमहानागान्कैलासगिरिसं
निभान् ॥४२॥ कैवल्योपनिषत्पाठान्मणिरत्नविभूषि
तान् ॥ सुवर्णवेत्रहस्ताढ्यंनंदिनंपुरतःस्थितम् ॥ ४३॥

स्त्रिलिंग्याम् । गंगादितटिन्यःनद्यःताभिर्युक्तंअंबुधिंसमुद्रंनीलविग्रहंश्यामलदेहम् ॥ ४१ ॥ श्वेताश्वतरशाखिनांमंत्रेणस्तुवंतम् ॥ ४२ ॥ कैवल्येति ॥ कैवल्योपनिषदंपठंतितेतथोक्तास्तान् । सुवर्णवेत्रसहितेनहस्तेनाढ्यम् ॥ ४३ ॥

दक्षिणइति॥ मूषकइतिधातुवृत्तौस्फुटम् । मूषकइतिग्रामादिकः । ददर्शेतिसर्वत्रसंबंधोज्ञेयः॥४४॥महाकालमिति॥ महाकालंचंडेशंचद्वौप्रमथविशेषौकालाग्निरुद्रंअवतारम् । ज्वलन्योदावाग्निर्वनाग्निस्तेनसदृशमितिनित्यसमासत्वादस्वप

दक्षिणेमूषकारूढंगणेशंपर्वतोपमम् ॥ मयूरवाहनारूढमुत्तरेषण्मुखंतथा ॥ ४४ ॥ महाकालंचचंडेशंपार्श्वयोर्भीषणाकृतिम् ॥ कालाग्निरुद्रंदूरस्थंज्वलद्दावाग्निसन्निभम् ॥ ४५ ॥ त्रिपादंकुटिलाकारंनटद्भृंगिरिटिंपुरः ॥ नानाविकारवदनान्कोटिशःप्रमथाधिपान्॥४६ ॥नानावाहनसंयुक्तंपरितोमातृमंडलम् ॥पंचाक्षरीजपासक्तान्सिद्धविद्याधरादिकान्४७



दविग्रहइतिज्ञेयम् ॥ ४५ ॥ त्रिपादमिति ॥ नटंश्चासौभृंगिरिटिश्चतंतथोक्तंअयमपिप्रमथविशेषः॥४६॥नानेति॥ मातृणांमंडलम् । "ब्राह्मीत्याद्यास्तुमातरः"

इत्यमरः ॥४७॥ दिव्येति ॥ रुद्राःकायंतेउच्चायंतेइतिरुद्रकाणिदिव्यानिचतानि तथोक्तानितान्येवगीतानि । गायतीतितद्गायत्किंनरवृंदकम् द्विजानांब्राह्मणानां कदंबकम् ॥४८॥ गायंतमिति ॥ अंगविक्षेपमात्रंनृत्तंपदार्थाभिनयोनृत्यंवाक्या

दिव्यरुद्रकगीतानिगा... किंनरवृंदकम् ॥ तत्रत्रैयंबकंमंत्रंज
पद्द्विजकदंबकम् ॥ ४८ ॥ गायतंवीणयागीतंनृत्यंतंनारदंदि
वि ॥ नृत्यतोनाटयन्नृत्येनरंभादीनप्सरोगणान् ॥ ४९ ॥
गायच्चित्ररथादीनांगंधर्वाणांकदंबकम् ॥ कंबलाश्वतरौशंभु
कर्णकुंडलतांगतौ ॥ ५० ॥ गायंतौपन्नगौगीतंकपालंकंबलं
तथा ॥ एवंदेवसभांदृष्ट्वाकृतार्थोरघुनंदनः ॥ ५१ ॥

भिनयोनाट्यमितिभेदः॥४९॥ गायदिति ॥ शंभोःकर्णौतत्रकुंडलतांगतौ ॥५०॥ गायंताविति॥ कपालंकंबलंचएतन्नामानौपन्नगौददर्श। एवमुक्तप्रकारेण॥५१॥

॥ ५२ ॥ इति श्रीलक्ष्मीनृसिंहपंडितसूनुहरिदीक्षितकृतौशिवगीतायांबालानंदि न्यांचतुर्थोऽध्यायः॥ ४ ॥ सूतउवाच ॥ अथेति ॥ अथसहस्त्रनामपाठानंतरम् । हिरण्यप्रचुरोहिरण्मयःसचासौरथश्चसतथा । किर्मीरितंचित्रवर्णकृतम् ॥ १ ॥



हर्षगद्गदयावाचास्तुवन्देवंमहेश्वरम्॥ दिव्यनामसहस्रेणप्रणनाम पुनःपुनः ॥ ५२ ॥ इतिश्रीपद्मपुराणेशिवगीतासूपनिषत्सुब्रह्मवि द्यायांयोगशास्त्रेशिवराघवसंवादे शिवप्रादुर्भावोनामचतुर्थोऽध्या यः ॥ ४ ॥ श्रीसूतउवाच ॥ अथप्रादुरभूत्तत्रहिरण्मयरथोमहान् ॥ अनेकदिव्यरत्नांशुकिर्मीरितदिगंतरः ॥ १ ॥ नद्युपांतिकपंकाढ्य महाचक्रचतुष्टयः ॥ मुक्तातोरणसंयुक्तःश्वेतच्छत्रशतावृतः ॥ २ ॥

॥ नदीति ॥ नद्यागौतम्याउपांतिकेनउपांतेभवेनपंकेनकर्दमेनआढ्यंलिप्तंमहा चक्राणांचतुष्टयंयस्यसतथोक्तःमुक्तामयेनतोरणेनसंयुक्तः ॥ २ ॥ ॥ ॥

शुद्धेति॥शुद्धंयद्धेमतत्प्रचुराःखुराःतैराढ्यायेतुरंगगणास्तैःसंयुक्तः। मुक्तावितानं मुक्ताफलनिर्मितंवितानमुल्लोचस्तेनाविलसन्नूर्ध्वस्थःदिव्योवृषोयस्यसतथाएवंभू तोध्वजोयस्यसतथा ॥३॥ मत्तेति॥ वारणिकाःकरिण्यःपंचतत्त्वैस्तदधिष्ठातृदेवै

शुद्धहेमखुरैराढ्यतुरंगगणसंयुतः ॥ मुक्तावितानविलसदू
र्ध्वदिव्यवृषध्वजः ॥ ३ ॥ मत्तवारणिकायुक्तः पंचतत्त्वोप
शोभितः ॥ पारिजाततरूद्भूतपुष्पमालाभिरंजितः ॥ ४ ॥
मृगनाभिसमुद्भूतकस्तूरीमदपंकिलः ॥ कर्पूरागरुधूपोत्थगं
धाकृष्टमधुव्रतः ॥ ५ ॥ संवर्तघनघोषाढ्योनानावाद्यसम
न्वितः ॥ वीणावेणुस्वनासक्तकिन्नरीगणसंकुलः ॥ ६ ॥

रुपशोभितःअभिरंजितोभूषितः ॥४॥ मृगेति॥ पंकिलःसंजातपंकःआकृष्टाबला दानीतामधुव्रताभ्रमरायस्मिन्सतथा ॥ ५॥ संवर्तेति॥ संवर्तेप्रलयेयेघनास्तेषां

घोषइवघोषस्तेनाढ्यःवीणादिस्वनासक्तेनकिन्नरीगणेनसंकुलः ॥६॥ एवमिति॥ पटतल्पेपटास्तरणे ॥७॥ सुरेति॥ सुराणांनीरजनेत्र्यःपञ्चदशस्तासांकंठेनीलःकेशेषुलोहितइतिनीललोहितइत्यर्थः ॥८॥ क्वणदिति ॥ क्वणतांशब्दंकुर्वतांकंकणा

एवंकृत्वारथश्रेष्ठंवृषाद्रुत्तीर्यशंकरः ॥ अंबयासहितस्तत्रपटतल्पेऽविशत्तदा ॥ ७ ॥ सुरनीरजनेत्रीणांश्वेतचामरचालनैः ॥ दिव्यव्यजनवातैश्चप्रहृष्टोनीललोहितः ॥ ८ ॥ क्वणत्कंकणनिध्वानैर्मंजुमंजीरसिंजितैः ॥ वीणावेणुस्वनैर्गीतैः पूर्णमासीज्जगत्त्रयम् ॥ ९ ॥ शुकवाक्यकलारावैः श्वेतपारावतस्वनैः ॥ उन्निद्रभूषाफणिनांदर्शनादेवबर्हिणः ॥ नन्रुतुर्दर्शयंतःस्वांश्चंद्रकान्कोटिसंख्यया ॥ १० ॥



नांनिध्वानैःशब्दैः"मंजीरोनूपुरोऽस्त्रियाम्"इत्यमरः । सिंजितंभूषणध्वनिः।"भूषणानांतुसिंजितम्" इतिचकोशः ॥९॥ शुकवाक्येति ॥ शुकानांकीराणांवाक्य

रूपायेकलारावाः अव्यक्तमधुरशब्दास्तैर्जगत्त्रयंपूर्णमासेतिप्राक्तनेनान्वयः। उन्निद्राणांहर्षादुल्लसतांभूषाफणिनांदर्शनादेवहेतोः बर्हिणोमयूराःकोटिसंख्ययो पलक्षितान्स्वानात्मीयान् चंद्रकान् चंद्रइवचंद्रकास्तान् मेचकापरपर्यायान् "इवे प्रतिकृतौ" इतिकन्। दर्शयंतोननृतुरित्यन्वयः ॥१०॥ प्रणमंतमिति॥ रथच

प्रणमंतंनतोराममुत्थाप्यवृषभध्वजः॥ आनिनायरथंदिव्यं
प्रहृष्टेनांतरात्मना ॥११॥ कमंडलुजलैःस्वच्छैःस्वयमाचम्य
यत्नतः॥ समाचाम्याथपुरतःस्वांकेराममुपानयत् ॥१२॥

क्रोपरिमस्तकंनिधायप्रणमंतंरामं वृषध्वजःशिवउपरिस्थलान्नतोनम्रःसन्नुत्था प्य प्रहृष्टेनांतरात्मनामनसा। इदंलीलाविग्रहत्वाद्युक्तम्। अन्यथा "अप्राणो ह्यमनाःशुभ्रः" इतिश्रुतिविरोधःस्यात्। दिव्यंरथंआनिनायप्रापयामासेत्यन्व यः॥ ११॥ कमंडल्विति॥ स्वयंकमंडलुजलैराचम्यराममाचाम्याचमनंकार

यित्वास्वस्यांकेउत्संगे“उत्संगचिन्हयोरंकः”इत्यमरः । उपानयद्गृहीतवानित्यर्थः ॥ १२ ॥ अथेति ॥ स्वांकउपवेशानंतरंतस्मैरामाय ॥१३॥ उक्तइति ॥ इदंसूतवाक्यंमुनीन्प्रति । किमुक्तस्तदेवाह ॥ जगदिति ॥ रौद्रंरुद्रदेवताकम् ॥१४॥

अथदिव्यंधनुस्तस्मैददौतूणीरमक्षयम् ॥ महापाशुपतंनामदिव्यमस्त्रंददौततः ॥१३॥ उक्तश्चतेनरामोऽपिसादरंचंद्रमौलिना ॥ जगन्नाशंकरंरौद्रमुग्रमस्त्रमिदंनृप ॥१४॥ अतोनेदंप्रयोक्तव्यंसामान्यसमरादिके ॥ अन्योनास्तिप्रतीघातएतस्यभुवनत्रये ॥१५॥ तस्मात्प्राणात्ययेरामप्रयोक्तव्यमुपस्थिते ॥ अन्यदैतत्प्रयुक्तंचेज्जगत्संक्षयकृद्भवेत् ॥१६॥

अतइति । प्रतीघातःप्रतीकारः ॥ १५ ॥ तस्मादिति ॥ प्राणात्ययेउपस्थितेप्राप्तेसतिएतत्प्रयोक्तव्यम् । विपक्षेबाधकमाह ॥ अन्यदेति ॥ पूर्वोक्तसंकटाभाव

काले ॥१६॥ अथेति ॥ स्वास्त्रोपदेशानंतरम् । यूयंस्वंस्वमस्त्रंरामायेतिशेषः १७ एतेनयुष्माकमेवेष्टंभविष्यतीत्याह ॥ राघवइति ॥ वयमेवतंहनिष्यामइतिचेत्त त्राह । तस्मैरावणायदेवैरवध्यत्वमित्येवंरूपोवरोमयादत्तः। अतोऽयंराघवएतस्य

अथाहूयसुरश्रेष्ठान्लोकपालान्महेश्वरः ॥ उवाचपरमप्रीतःस्वंस्वमस्त्रं प्रयच्छत॥१७॥राघवोऽयंचतैरस्त्रैरावणंनिहनिष्यति॥ तस्मैदेवैरवध्य त्वमितिदत्तोवरोमया ॥१८॥ तस्माद्वानरतामेत्यभवंतोयुद्धदुर्मदाः ॥ साहाय्यमस्यकुर्वंतुतेनसुस्थाभविष्यथ ॥ १९ ॥ तदाज्ञांशिरसागृह्य सुराःप्रांजलयस्तदा ॥ प्रणम्यचरणौशंभोःस्वंस्वमस्त्रंददुर्मुदा ॥ २० ॥

हंतेतिभावः ॥१८॥ तस्मादिति ॥ यस्मात्पूर्वमेवमयाचोदिताःसंतोयूयंवानरता मेत्यतत्रतत्रतिष्ठंताम् । तस्मात्कारणाद्भवंतःसर्वेयुद्धदुर्मदायुद्धेसोत्कंठाः । अस्य साहाय्यंकुर्वंतु। फलमाह ॥ तेनेति ॥ १९ ॥ तदाज्ञामिति ॥ गृह्यगृहीत्वेत्यर्थः।

छांदसोऽयंल्यप् ॥ २० ॥ तान्येवास्त्राणिनामतोनिर्दिशति ॥ नारायणेति ॥ धनं जयोऽग्निः ॥ २१ ॥ याम्यमिति ॥ रक्षोराजोनामनिर्ऋतिः प्रभंजनोवायुः ॥ २२ ॥

नारायणास्त्रंदैत्यारिरैंद्रमस्त्रंपुरंदरः ॥ ब्रह्मापिब्रह्मदंडास्त्रमाग्नेयास्त्रं धनंजयः ॥ २१ ॥ याम्यंयमोऽपिमोहास्त्रंरक्षोराजस्तथाददौ ॥ वरुणोवारुणंप्रादाद्वायव्यास्त्रंप्रभंजनः ॥ २२ ॥ कौबेरंचकुबेरोऽपिरौद्रमीशानएवच ॥ सौरमस्त्रंददौसूरःसौम्यंसोमश्चपावकम् ॥ विश्वेदेवाददुस्तस्मैवसवोवासवाभिधम् ॥ २३ ॥ अथतुष्टःप्रणम्येशंरामोदशरथात्मजः ॥ प्रांजलिःप्रणतोभूत्वाभक्तियुक्तोव्यजिज्ञपत् ॥ २४ ॥ श्रीरामउवाच ॥ भगवन्मानुषैरेवनोल्लंघ्योलवणांबुधिः ॥

कौबेरमिति ॥ ईशानोलोकपालः । सूरःसूर्यःपावकंविश्वेदेवाददुः ॥ २३ ॥ अथेति ॥ व्यजिज्ञपद्विज्ञापितवान् ॥ २४ ॥ भगवन्निति ॥ एवकारःकार्त्स्न्ये ।

सर्वैरपिमनुष्यैरित्यर्थः । किंचतत्रदुर्गमस्ति । तदपिनसाधारणमित्याह । दुर्जयमिति ॥ २५ ॥ रक्षकाअपिदुर्जयाइत्याह ॥ अनेकेति ॥ शिवभक्ताइत्यनेन शिवभक्तानांद्रोहोनकल्याणायकल्पतइतिध्वनितम् । ननुएकशब्दस्यनित्यैकवचनांततयानञ्समासस्योत्तरप्राधान्यतयाअनेकशब्दोऽपिनित्यैकवचनांतएव ।

तत्रलंकाभिधंदुर्गंदुर्जयंदेवदानवैः ॥ २५ ॥ अनेककोटयस्तत्रराक्षसाबलवत्तराः ॥ सर्वेस्वाध्यायनिरताःशिवभक्ताजितेंद्रियाः ॥ २६ ॥ अनेकमायासंयुक्ताबुद्धिमंतोऽग्निहोत्रिणः ॥ कथमेकाकिनाजेयामयाभ्रात्राचसंयुगे ॥२७॥

किंच कोटिशब्दस्यापिबहुवचनांतत्वमनुपपन्नम् "विंशत्याद्याःसदैकत्वे" इत्यमरात् । तथाचअनेकाश्चताःकोटयश्चेतिकथंसंभवतीतिचेत्सत्यम् । अनेकशब्दानां बहूनामेकशेषेतदुपपत्तेः संख्याव्यक्तिबहुत्वेचबहुवचनोपपत्तेश्च ॥ २६ ॥ २७ ॥

॥२८॥२९॥ राजस्त्रीसीतातस्यालंघनमवज्ञातस्यामासक्तम् । पानासक्तोमद्यपः सुशक्यः॥३०॥ धर्मिष्ठःशत्रुरेवजेतुमशक्यः। अयंतुनतथेत्यन्यापदेशेनाह ॥ अध

॥ईश्वरउवाच॥ रावणस्यवधेरामरक्षसामपिमारणे॥ विचारोनत्वयाकार्यस्तस्यकालोऽयमागतः॥२८॥ अधर्मेतुप्रवृत्तास्तेदेवब्राह्मणपीडने॥ तस्मादायुःक्षयंयातंतेषांश्रीरपिसुव्रत॥२९॥ राजस्त्रीलंघनासक्तंरावणंनिहनिष्यसि॥ पानासक्तोरिपुर्जेतुंसुकरःसमरांगणे॥३०॥ अधर्मनिरतःशत्रुर्भाग्येनैवहिलभ्यते॥ अधीतवेदशास्त्रोऽपिसदाधर्मरतोऽपिवा॥ विनाशकालेसंप्राप्तेधर्ममार्गाच्च्युतोभवेत्॥३१॥ पीडयंतेदेवताःसर्वाःसततंयेनपापिना॥ ब्राह्मणाऋषयश्चैवतस्यनाशःस्वयंस्थितः॥३२॥

र्मेति॥ अधर्मएवविनाशहेतुरित्याह॥ अधीतेति॥३१॥ पीडयंतइति॥ त

स्यनाशः स्वयमेवोपस्थितः । त्वंनिमित्तमात्रंभवेतिभावः ॥३२॥ साहायानाह ॥
किष्किंधेति॥३३॥ साहाय्यमिति ॥ बधानसमुद्रबंधनंकुर्वित्यर्थः। बलीमुखाःक

किष्किंधानगरेरामदेवानामंशसंभवाः ॥ वानराबहवोजातादु
र्जयाबलवत्तराः॥ ३३ ॥ साहाय्यंतेकरिष्यंतितैर्बधानपयोनि
धिम् ॥ अनेकशैलसंबद्धेसेतौयांतुबलीमुखाः॥ रावणंसगणंह
त्वातामानयनिजप्रियाम् ॥३४॥ शस्त्रैर्युद्धेजयोयत्रतत्रास्त्राणि
नयोजयेत् ॥ निरस्त्रेष्वल्पशस्त्रेषुपलायनपरेषुच ॥ अस्त्राणिमुंच
न्दिव्यानिस्वयमेवविनश्यति ॥३५॥ अथवाकिंबहूक्तेनमयैवो
त्पादितंजगत् ॥ मयैवपाल्यतेनित्यंमयासंह्रियतेऽपिच ॥३६॥

पयः॥आनयेत्याशिषिलोट् ॥३४॥ महाशस्त्रप्रयोगार्हानर्हशत्रुविचारमाह ॥ शस्त्रै
रिति ॥३५॥ चिंतानकार्यैतिसमाश्वासयन्नुपसंहरति ॥अथवेति॥ त्रिभिः ॥३६॥

॥३७॥३८॥ इतिबालानं० पंचमोऽध्यायः ॥५॥ पूर्वाध्यायांतेजगज्जन्मादिकर्तृत्वं प्रतिपादितंतन्मूर्तस्यकथमुपपद्यतइतिशंकांकुर्वन् ॥ श्रीरामउवाच ॥ भगवन्निति ॥हेभगवन्। अत्रसृष्ट्यादिकर्ताहमेवेत्येवंरूपेत्वदुक्तेऽर्थेमेममहच्चित्रंमहाश्च

अहमेकोजगन्मृत्युर्मृत्योरपिमहीपते ॥ ग्रसेऽहमेवसकलंजगदेतच्चराचरम् ॥ ३७ ॥ ममचक्रगताः सर्वेराक्षसायुद्धदुर्मदाः ॥ निमित्तमात्रस्त्वंभूयाःकीर्तिमाप्स्यासिसंगरे ॥ ३८ ॥ इतिश्रीशिव०रामायवरप्रदानंनामपंचमोऽध्यायः ॥५॥ श्रीराम० ॥ भगवन्नत्रमेचित्रंमहदेतत्प्रजायते ॥ शुद्धस्फटिकसंकाशस्त्रिनेत्रश्चंद्रशेखरः ॥१॥ मूर्तस्त्वंतुपरिच्छिन्नाकृतिःपुरुषरूपधृक् ॥ अंबयासहितोऽत्रैवरमसेप्रमथैःसह ॥२॥

र्यंप्रजायते। आश्चर्यैबीजमाह ॥ शुद्धेत्यादिना ॥१ ॥ मूर्तइति ॥ मूर्तःपरिच्छिन्नः। अतएवपरिच्छिन्नाकृतिः। पुरुषरूपेणधृष्णोतीतितथोक्तः। ऋत्विगितिसूत्रे

निपातनात्कुलम् ॥२॥ त्वंकथमिति ॥ एवंभूतस्त्वंपंचभूतान्यादिर्यस्यतथाभूतमे
तच्चराचरंकरोषिपालयसिहंसिचेतिशेषः। सर्वात्मकत्वंजगदेतादितितुनाक्षिप्यते।
तस्यपूर्वाध्यायांतेऽनुपक्रांतत्वात्। तथाचशंकितुरयमाशयः। परिच्छिन्नदेहस्यकृ

त्वंकथंपंचभूतादिजगदेतच्चराचरम् ॥ तद्ब्रूहिगिरिजाकांतय
दितेऽनुग्रहोमयि ॥ ३ ॥ श्रीभगवा० ॥ शृणुराममहाभागदुर्ज्ञे
यममरैरपि ॥ तत्प्रवक्ष्यामियत्नेनब्रह्मचर्येणसुव्रत ॥ पारंया
स्यस्यनायासाद्येनसंसारनीरधेः॥४॥ दृश्यंतेपंचभूतानियेच
लोकाश्चतुर्दश ॥ समुद्राःपर्वतादेवाराक्षसाऋषयस्तथा ॥५॥

लालादेर्विप्रकृष्टकार्यजनकत्वानुपपत्तिरित्यादि ॥३॥ शृणिवति॥ हेरामयत्नेनब्र
ह्मचर्येणशृणु। यदमरैरपिदुर्ज्ञेयंतत्प्रवक्षामितुभ्यमितिशेषः। येनज्ञानेन ॥ ४ ॥ य
थाजीवस्याहंकारवृत्तिसापेक्षंकर्तृत्वंतथानममकर्तृत्वंकिंतुमायावृत्तिसापेक्षतस्य

लीलाविग्रहस्यपरिच्छिन्नत्वेऽपिकर्तृत्वांशानुपयोगान्नकश्चिद्दोषः । ममामायाया
श्वसर्वांगत्वात्समस्तजगदुपादानत्वमस्तीत्यतोमयिशंकांमाकार्षीरित्याशयेनाह
॥ दृश्यंतइति ॥ द्वाभ्यांपंचभूतादिसर्वंमायातत्कार्यंचमयिविवर्तमात्रंसुवर्णेऽलं

दृश्यंतेयानिचान्यानिस्थावराणिचराणिच ॥ गंधर्वाःप्रमथा
नागाःसर्वेतेमद्विभूतयः ॥ ६ ॥ पुराब्रह्मादयोदेवाद्रष्टुकामाममा
कृतिम् ॥ मंदरंप्रययुःसर्वेममप्रियतरंगिरिम् ॥ ७ ॥ स्तुत्वाप्रांज
लयोदेवामांतथापुरतःस्थिताः ॥ तान्दृष्ट्वाथमयादेवान्लीलाकु
लितचेतसः ॥ तेषामपहृतंज्ञानंब्रह्मादीनांदिवौकसाम् ॥ ८ ॥

कारभेदवन्मायायाइदंसर्वपरिणामः । दुग्धस्यदधीव ॥ ५ ॥ ६ ॥ इममेवार्थंपूर्वक
थोपन्यासेनद्रढयति ॥ पुरेति ॥ आकृतिंलीलाविग्रहम् ॥ ७ ॥ स्तुत्वेति ॥ मां
स्तुत्वाप्रांजलयः संतस्तथैवपुरतःस्थिताःतान्मदीयलीलयाआकुलितंचेतोयेषांत

थाभूतान्दृष्ट्वामयातेषांज्ञानमपहृतम् । प्रश्नावतरणपूर्वकंपरमतत्वोपदेशार्थमिति भावः ॥८॥ आसन्निति ॥ अज्ञानाज्ज्ञानशून्याआसन् । भवान्कइतिमामाहुः।अ सकृद्वारंवारम् ।अथतेऽपहृतज्ञानाइत्यपिपाठांतरम् ।अथतेषांप्रश्नानंतरंदेवानह मब्रुवम् । अहमेवपुरातनइति ॥ ९ ॥ ननु "जीवईशोविशुद्धाचित्तस्यांभेदस्तयो

आसंस्तेऽसकृदज्ञानामामाहुःकोभवानिति ॥ अथाब्रुवमहंदे
वानहमेवपुरातनः ॥ ९ ॥ आसंप्रथममेवाहंवर्तामिचसुरेश्व
राः ॥ भविष्यामिचलोकेऽस्मिन्मत्तोनान्योऽस्तिकश्चन॥ १० ॥

र्द्वयोः ॥ अविद्याचित्तयोर्योगःषडस्माकमनादयः" इतिसिद्धांतेउक्तंतत्रकथमहमे वपुरातनइत्युक्तमितिचेत्तत्राह ॥ आसमिति ॥ मत्तोऽन्योऽविद्यातत्संबंधादिः कोऽपिपारमार्थिकोनास्तीत्यर्थः । तथाचश्रुतिः।"तेदेवारुद्रमपृच्छन् । कोभवानि ति । सोऽब्रवीत् । अहमेकःप्रथममासंवर्तामिचभविष्यामिच"इत्यादि । तथाचक

ल्पितभावाभावयोरधिष्ठानमात्रस्वरूपत्वंरज्जुसर्पादौप्रसिद्धमितिभावः॥ १० ॥ व्यतिरिक्तमिति॥ पूर्वमुक्तोऽप्यर्थःपुनरभ्यस्यते। अभ्यासोहितात्पर्यलिंगम्। तदुक्तम्। "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्॥ अर्थवादोपपत्तीचलिंगं तात्पर्यनिर्णये" इति। नित्यइतिस्वरूपेण। अनित्यःघटादितादात्म्यात्।

व्यतिरिक्तंचमत्तोऽस्तिनान्यत्किंचित्सुरेश्वराः॥नि
त्योऽनित्योऽहमनघोब्रह्मणांब्रह्मणस्पतिः ॥ ११ ॥
दक्षिणांचउदंचोऽहंप्रांचःप्रत्यंचएवच॥ अधश्चोर्ध्वं
चविदिशोदिशश्चाहंसुरेश्वराः ॥ १२ ॥

ब्रह्मणांवेदानांब्रह्मणश्चतुर्मुखस्य। अविद्यारहितत्वादनघः॥ ११ ॥दक्षिणेति॥ दक्षिणस्यामंचतीतिदक्षिणांचः। उदुत्तरस्यामंचतीतितथा। प्रपूर्वस्यांप्राग्वत्। अधश्चोर्ध्वंचांचतीतिशेषः। दिशोविदिशश्चेतिसर्वत्रपरिपूर्णइत्यर्थः ॥ १२ ॥

स्वस्यसर्वतादात्म्यापन्नत्वात्सर्वस्वरूपत्वमाह ॥ सावित्रीति ॥ एकस्याएवगाय
त्र्याःकालभेदान्नामभेदः। "गायत्रीनामपूर्वाह्णेसावित्रीप्रथमेदिने" इति। इदंसर
स्वत्याअप्युपलक्षणम्॥स्त्र्यादिव्यक्तित्रयमहमेव। अपुमान्नपुंसकमित्यर्थः। त्रिष्टु
बित्यादिविशेषरूपोऽहम्। त्रयीमयऋगादिवेदत्रयप्रचुरःतत्प्रतिपाद्यस्वरूपोऽह

सावित्रीचापिगायत्रीस्त्रीपुमानपुमानपि ॥ त्रिष्टुप्जगत्य
नुष्टुप्चपङ्क्तिश्छंदस्त्रयीमयः ॥ १३ ॥ सत्योऽहंसर्वतःशांत
स्त्रेताग्निर्गौरवंगुरुः॥गौरहंगह्वरंचाहंद्यौरहंजगतांप्रभुः॥ १४॥

म् ॥ १३॥ सत्यइति ॥ मिथ्याभूतानामविद्यातत्कार्याणामधिष्ठानेमयित्रैकालिक
निषेधप्रतियोगित्वादहमेवपरमार्थसत्यइत्युक्तंस्मारयति। अतएवसर्वतःसर्वेभ्यः
प्रातिभासिकव्यावहारिकसत्येभ्यइत्यर्थः। सार्वविभक्तिकस्तसिः। शांतःआविद्य
कधर्मैरक्षुब्धः। त्रेताग्निराहवनीयादिः। गौरवंगुरोःकर्माध्ययनादि। गुरुश्चाहम्।

गौर्वाक्गह्वरंरहस्यंद्यौः स्वर्गः प्रभुर्नियंता ॥ १४ ॥ ज्येष्ठइति ॥ ज्येष्ठःसर्वेषामा दिभूतत्वात्।वर्षिष्ठःज्ञानेनबद्धतरत्वात्।अपांपतिःसमुद्रः।आर्यःपूज्यतमत्वात्। भगवान्षड्गुणत्वात्। "ऐश्वर्यस्यसमग्रस्यधर्मस्ययशसः श्रियः॥ ज्ञानवैराग्य

ज्येष्ठःसर्वसुरश्रेष्ठोवर्षिष्ठोऽहमपांपतिः ॥ आर्योऽहंभगवा
नीशस्तेजोऽहंचादिरप्यहम्॥१५॥ ऋग्वेदोऽहंयजुर्वेदःसाम
वेदोऽहमात्मभूः ॥ अथर्वणश्चमंत्रोऽहंतथाचांगिरसोवरः
॥ १६ ॥ इतिहासपुराणानिकल्पोऽहंकल्पवानहम् ॥ नारा
शंसीचगाथाहंविद्योपनिषदोऽस्म्यहम् ॥ १७ ॥

योश्चैवषण्णांभगइतींगना" इंगनासंज्ञा। तेजोऽहम्। आदिस्तेजसः वायुरित्य र्थः ॥ १५ ॥ ऋग्वेदइति ॥ अथर्वणोंऽगिरसश्चमंत्रोयः सचतुर्थोवेदः सचाहामि त्यर्थः ॥ १६ ॥ इतिहासोभारतादिः। पुराणानिब्राह्मादीनि। कल्पः प्रयोगः।

कल्पवान् तत्कर्ताबोधायनादिः। नाराशंसीनामरुद्रप्रतिपादकमंत्रविशेषः। गाथायज्ञप्रशंसादिः। विद्याउपासना "येऽन्नंब्रह्मोपासत" इत्यादिः। उपनिषदः ब्रह्मप्रतिपादिकाविद्याः॥१७॥श्लोकाः "तदप्येषश्लोकोभवति" इत्यादिलक्षणाः।

श्लोकाः सूत्राणिचैवाहमनुव्याख्यानमेवच ॥ व्याख्यानानितथा विद्याइष्टंहुतमथाहुतिः ॥ १८ ॥ दत्तादत्तमयंलोकः परलोकोऽहमक्षरः ॥ क्षरःसर्वाणिभूतानिदांतिःशांतिरहंखगः ॥ १९ ॥ गुह्योऽहंसर्ववेदेषुआरण्योऽहमजोऽप्यहम् ॥ पुष्करंचपवित्रंचमध्यं चाहमतःपरम् ॥ बहिश्चाहंतथाचांतःपुरस्तादहमव्ययः ॥ २० ॥

सूत्राणिऋषिकृतानि। अनुव्याख्यानानिशास्त्रेषु। विद्यागांधर्वाद्याः। इष्टंयागः। हुतंहोमः। आहुतिर्द्रव्यम्॥१८॥ दत्तइति ॥ दत्तोदानकर्मीभूतोगवादिः। दत्तंदानम्। लोकःइहलोकः। परलोकःपुण्यादीनांफलीभूतःस्वर्गादिः॥१९॥बहिरिति॥

बहिश्चाहमित्यादिदक्षिणांचइत्यादिनोक्तमप्यभ्यासार्थंपुनरुक्तम् । एतदेवा
स्मिन्प्रकरणेसर्वेषुपौनरुक्त्येषुसमाधानंज्ञेयम् ॥ २० ॥ ज्योतिरिति ॥ तन्मा



ज्योतिश्चाहंतमश्चाहंतन्मात्राणींद्रियाण्यहम् ॥ बुद्धिश्चाह
महंकारोविषयाण्यहमेवहि ॥ २१ ॥ ब्रह्माविष्णुर्महेशोऽह
मुमास्कंदोविनायकः ॥ इंद्रोऽग्निश्चयमश्चाहंनिर्ऋतिर्वरुणो
ऽनिलः ॥ २२ ॥ कुबेरोऽहंतथेशानोभूर्भुवःस्वर्महर्जनः ॥
तपःसत्यंचपृथिवीचापस्तेजोऽनिलोऽप्यहम् ॥ २३ ॥ आ
काशोऽहंरविःसोमोनक्षत्राणिग्रहाण्यहम् ॥ प्राणःकालस्त
थामृत्युरमृतंभूतमप्यहम् ॥ २४ ॥

त्राणिअहंभूतानिविषयाणिविषयाइत्यर्थः । क्लीबत्वमार्षम् ॥ २१ ॥ २२ ॥ २३ ॥
आकाशइति ॥ ग्रहाणीत्यार्षम् । भूतमतीतम् ॥ २४ ॥

भव्यमिति ॥ सर्वात्मकअंतर्यामीति । आदौॐकारः मध्येभूर्भुवः स्वः । ततो गायत्रीततःशीर्षम् । "ॐआपोज्योतिः" इत्यादि । जपतांद्विजानांइदंसर्वमहमे वव्यस्तंसमस्तंच । विश्वरूपोविराण्मूर्तिः ॥ २५ ॥ अशितमिति ॥ परायणः

भव्यंभविष्यत्कृत्स्नंचविश्वंसर्वात्मकोऽप्यहम् ॥ ओमादौचतथा मध्येभूर्भुवःस्वस्तथैवच ॥ ततोऽहंविश्वरूपोऽस्मिशीर्षंचजपतांस दा ॥२५॥ अशितंपायितंचाहंकृतंचाकृतमप्यहम् ॥ परंचैवापरंचाह महंसूर्यःपरायणः ॥२६॥ अहंजगद्धितंदिव्यमक्षरंसूक्ष्ममप्यहम् ॥प्रा जापत्यंपवित्रंचसौम्यमग्राह्यमाग्रियम् ॥ २७ ॥ अहमेवोपसंहर्ताम हाग्रासौजसांनिधिः ॥ हृदयेदेवतात्वेनप्राणत्वेनप्रतिष्ठितः ॥ २८ ॥

सर्वेषामाश्रयः ॥ २६ ॥ अहमिति ॥ प्राजापत्यंप्रजापतिदेवतात्मकम् । अ ग्रियंअग्रेभवम् ॥ २७ ॥ अहमेवेति ॥ महांतो नगसागराद्याः ग्रासाभक्ष्याणि

येषांतेषांतेजसांप्रलयाग्न्यादीनांनिधिरधिष्ठानम् । प्राणिनांहृदयेदेवतात्वप्राण
त्वाभ्यांप्रतिष्ठितश्चाहमेव ॥ २८ ॥ शिरइति ॥ यस्याञ्रूपस्यस्पर्शाउत्तरतउत्तर
स्यांदिशिशिरः । ऊष्माणोदक्षिणतःदक्षिणस्यांदिशिपादौ । अंतःस्थसंज्ञःसर्वोऽ
पियस्यांतरोमध्यभागः । ससाक्षादोंकारोऽहंकयापिविवक्षयाभागकल्पनाकृतेति

शिरश्चोत्तरतोयस्यपादौदक्षिणतस्तथा ॥ यस्यसर्वोऽतरःसाक्षादों
कारोऽहंत्रिमात्रकः ॥२९॥ ऊर्ध्वमुन्नापयेयस्मादधश्चापनयाम्यथ ॥
तस्मादोंकारएवाहमेकोनित्यःसनातनः ॥ ३० ॥ ऋचोयजूंषिसामा
नियोब्रह्मायज्ञकर्मणि॥प्रणामयेब्राह्मणेभ्यस्तेनाहंप्रणवोमतः ॥३१॥

ज्ञेयम् ॥ २९ ॥ ऊर्ध्वमिति ॥ यस्मात्प्राणिनोजापकानूर्ध्वंस्वर्गादिकंप्रतिउन्नाप
येऽपनयामि । अथपुण्येक्षीणेसतिअधः नयामिच । तस्मादोंकारः ॥३०॥ प्रका
रांतरेणनिर्वक्ति ॥ ऋचइति ॥ योऽहंब्रह्माख्यऋत्विग्विशेषः सन् ऋगादीनित

तद्दत्विजःप्रतिप्रणामयेउपस्थापयामि । तेनकारणेनाहं प्रणवोमतः ॥ ३१ ॥
स्नेहइति ॥ स्नेहोघृतादिद्रव्यं मांस[illegible]डं कर्म व्याप्नोति । तस्मिन्मांसखंडेभुक्ते
सस्थूलदेहंव्यापयतिच तद्वदहमप्यधिष्ठानत्वेनानुस्यूतः सन् । यतःसर्वव्याप्नो

स्नेहोयथामांसखंडंव्याप्नोतिव्यापयत्यपि ॥ सर्वलोकानहंतद्वत्स
र्वव्यापीततोऽस्म्यहम् ॥३२॥ ब्रह्माहरिश्चभगवानाद्यंतंनोपलब्ध
वान् ॥ ततोऽन्येचसुरायस्मादनंतोऽहमितीरितः ॥ ३३ ॥ गर्भज
न्मजरामृत्युसंसारभयसागरात् ॥ तारयामियतोभक्तंतस्मात्ता
रोऽहमीरितः ॥ ३४ ॥ चतुर्विधेषुदेहेषुजीवत्वेनवसाम्यहम् ॥ सू
क्ष्मोभूत्वाथहृद्देशेयत्तत्सूक्ष्मःप्रकीर्तितः ॥ ३५ ॥

मि सर्वलोकंव्यापयामिच । ततोहेतोः सर्वव्याप्यास्मि ॥ ३२ ॥ ब्रह्मेति ॥ आदि
श्चांतश्चतयोः समाहारआद्यंतम् ॥ ३३ ॥ ३४ ॥ चतुर्विधेष्विति ॥ जरायु

जांडजस्वेदजोद्भिज्जेषुदेहेषुजीवत्वेनवसामि हृद्देशेसूक्ष्मोभूत्वेतिस्वभावतः सूक्ष्म त्वाभावेऽप्यंतःकरणौपाधिकंसूक्ष्मत्वमस्तीत्यर्थः। एतेन "एषोऽणुरात्मा" इत्यादिश्रुतयोऽपिऔपाधिकाणुपराएव। एतेनस्वाभाविकमणुत्वंजीवस्येतिवदंतोमाध्वाः परास्ताः ॥ ३५ ॥ महातमसीति ॥ महातमसि अविद्यायां यद्यस्मात्

महातमसिमग्नेभ्योभक्तेभ्योयत्प्रकाशये ॥ विद्युद्वदतुलंरूपंतस्मा
द्वैद्युतमस्म्यहम् ॥ ३६ ॥ एकएवयतोलोकान्विसृजामिसृजामि
च ॥ विवासयामिगृह्णामितस्मादेकोऽहमीश्वरः ॥ ३७ ॥

कारणात् विद्युद्वत्तडिद्वत् एतत्सदृशमित्यर्थः । अतुलमसदृशंरूपंप्रकाशयेत स्माद्वैद्युतमितिशब्दवाच्योऽस्मि ॥ ३६ ॥ एकइति ॥ सृजामिविसृजामिसंहरामिविवासयामिलोकाल्लोकांतरंप्रापयामिगृण्हामिअनुगृण्हामि । यस्माज्जगत्सृष्ट्यादिषुममैकस्यैवस्वातंत्र्यमस्ति तस्मादेकशब्दभागस्मि ॥ ३७ ॥

नद्वितीयइति ॥ यतोयस्माद्ब्रह्मणोद्वितीयोनतस्थे । किंतु आत्मनिभूतानिसंहृत्य एकएववसामि "आत्मावाइदमेकएवाग्रआसीत्" इत्यादिश्रुतेः । आत्मानंविशिनष्टि ॥ तुरीयमिति ॥ गुणत्रयोपाधिकेभ्योब्रह्मादिभ्योविलक्षणंतुरीयंब्रह्म चतुर्थंनिर्गुणमित्यर्थः । आत्मनोनिजंरूपं तस्थइत्यत्र " छंदसिलुङ्लङ्लिटः "

नद्वितीयोयतस्तस्थेतुरीयंब्रह्मयत्स्वयम् ॥ भूतान्यात्मनिसंहृत्य चैकोरुद्रोवसाम्यहम् ॥ ३८ ॥ सर्वलोकान्यदीशेऽहमीशिनीभिश्च शक्तिभिः ॥ ईशानमस्यजगतः स्वर्दृशंचक्षुरीश्वरम् ॥ ३९ ॥

इतिकालविशेषनिरपेक्षोलिट् ॥ ३८ ॥ सर्वलोकानिति ॥ यद्यस्मात्कारणात् ईशयंत्यभीक्ष्णंनियमयंतीत्यर्थः । इतीईशिन्यः । णिजंतादाभीक्ष्ण्येणिनिः । तादृशीभिः शक्तिभिः मायाशक्तिभिरित्यर्थः ॥ सर्वान्लोकानीशेनियमये । तत्तस्मात्कारणादीशानोऽस्मीत्यन्वयः । अत्रार्थेश्रुतिमर्थतः पठति ॥ ईशानमस्येति ॥

जगतः जंगमस्यतस्थुषः स्थावरस्यचईशानंस्वर्दृशं स्वःशब्दः सकललोकलक्ष कः स्वःपश्यतीतिस्वर्दृक् तंस्वर्दृशं सर्वलोकद्रष्टारमित्यर्थः । चष्टेइतिचक्षुः । अभिव्यंजकं सत्ताप्रदमित्यर्थः । श्रुतिरपि । " अभित्वाशूरनोनुमोदुग्धाइव धेनवः । ईशानमस्यजगतः स्वर्दृशमीशानमिंद्रतस्थुषः " इति । हेशूरहेइंद्रइंद तीतींद्रपरमैश्वर्यत्वात्त्वांअभिनोनुमः अतिशयेनस्तुमः। कथंभूतावयम्। अदुग्धा

ईशानमिंद्रतस्थुषःसर्वेषामपिसर्वदा ॥ ईशा
नःसर्वविद्यानायदीशानस्तदस्म्यहम् ॥४०॥

धेनवइवत्वदभिषेकार्थंक्षीरपात्रशालिनइत्यर्थः । उत्तरार्धंव्याख्यातम् ॥ ३९ ॥ एवमृचमर्थतःपठित्वायजुरर्थतःपठति ॥ ईशानइति ॥ " ईशानःसर्वविद्याना मीश्वरःसर्वभूतानाम् " इत्यादियाजुषेऽपि । यद्यस्मात्कारणाच्छ्रुतिद्वयमीशानं प्रति पादयतितस्मादीशानोऽहमितिभावः ॥ ४० ॥

सर्वानिति ॥ यस्मात्कारणात् सर्वानतीतानागतभूतान् भावान् पदार्थान्निरीक्षे पश्यामि। तथामहतः महापुरुषान् साधनसंपन्नानितियावत् । आत्मज्ञानं आत्मसाक्षात्कारसाधनंयोगं ज्ञानयोगमित्यर्थः। निरीक्षयेबोधयामि। तथासम्यक् अयेगच्छामि सर्वंव्याप्नोमीत्यर्थः । अतःकारणादहंभगवान्मतः ।

सर्वान्भावान्निरीक्षेऽहमात्मज्ञानंनिरीक्षये ॥
योगंचसमयेयस्माद्भगवान्महतोमतः ॥४१॥
अजस्रंयच्चगृह्णामिविसृजामिसृजामिच ॥
सर्वाँल्लोकान्वासयामितेनाहंवैमहेश्वरः॥४२॥

"भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः। तथाचमाहात्म्यवाचीभगशब्दः तद्वानहम्। माहात्म्यंतूक्तमेव ॥ ४१ ॥ अजस्रमिति ॥ एकएवयतो लोकानित्यस्मिन्श्लोकेउक्तएवार्थोऽत्राभ्यासार्थंपुनरुक्तइत्यपौनरुक्त्यम् ॥४२॥

महत्स्विति ॥ महांतोब्रह्मादयस्तेषु मध्येसोऽहंमहादेवइतिसंबंधः । सकइत्या
कांक्षायांयइत्यध्याहृत्य योदेवआत्मज्ञानंचयोगाश्चतैर्महीयतेपूजांप्राप्नोतिऐश्वर्यै
श्चमहीयते । यः सर्वान् भावान् सृजति अवति समहादेवोऽहमेवनान्यइतिभावः
॥ ४३ ॥ महत्त्वमेवद्रढयति ॥ एषोऽस्मीति ॥ "एषोहिदेवः प्रदिशोनुसर्वाः"

महत्स्वात्मज्ञानयोगैरैश्वर्यैस्तुमहीयते ॥ सर्वान्भावान्म
हादेवःसृजत्यवतिसोऽस्म्यहम् ॥ ४३ ॥ एषोऽस्मिदेवःप्रदि
शोऽपिसर्वाःपूर्वोहिजातोऽस्म्यहमेवगर्भे ॥ अहंहिजातश्च
जनिष्यमाणःप्रत्यग्जनास्तिष्ठतिसर्वतोमुखः ॥ ४४ ॥

इतिश्रुतिमर्थतःपठति । अहमेवश्रुत्युक्तोदेवास्तिष्ठतिसदेवोऽस्मि । सर्वाःप्रदि
शोऽपिअस्मि सर्वत्रास्मीत्यर्थः । "अकर्मकधातुभिर्योगेदेशःकालोगंतव्योऽध्वाच
कर्मसंज्ञकः" इतिकर्मत्वम् । पूर्वोजातः अतीतइत्यर्थः । तथा गर्भेजातोऽहमेव ।

तथाजातःगर्भाद्बहिर्निर्गतश्च जनिष्यमाणउत्पत्स्यमानश्चाहमेव।किंचसर्वेजना अहमेव अतएवसर्वतोमुखः। इतिसोपाधिकंस्वरूपमुक्त्वानिरुपाधिकमाह॥ प्रत्यगिति ॥ अविद्यातत्कार्येभ्यःप्रातिकूल्येनसत्यज्ञानानंदतयांचातिप्रकाशतइति प्रत्यक्। विवर्ताधिष्ठानमात्रमित्यर्थः॥४४॥ अस्मिन्नर्थेदार्ढ्यायश्रुत्यंतरमर्थतःपठति।

विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात्॥
संबाहुभ्यांधमतिसंपतत्रैर्द्यावाभूमीजनयंदेवएकः ॥ ४५ ॥

विश्वतइति॥ विश्वतादात्म्यापन्नत्वात्सर्वचक्षुः सर्वमुखः सर्वबाहुःसर्वपाद इत्युच्यते। बाहुभ्यांतथापतत्रैर्गमनशीलैःपादैरित्यर्थः। अत्रपाणिपादस्थानापन्नैर्ज्ञानाज्ञानधर्माधर्मादिभिरित्यर्थः। दिवंचपृथिवींचधमतिप्रेरयति। किंकुर्वन् द्यावाभूमीजनयन्सृजन्। तथापिदेवएकएव सृष्टेर्मायिकत्वादितिभावः ॥४५॥

वालाग्रेति ॥ धियंबुद्धिमीरयंतीतिधीराः कुशलायेपुरुषाः मांआत्मस्थंबुद्धिस्थं अनुपश्यंतिश्रवणादिसाधनमनुसृत्यपश्यंति साक्षात्कुर्वंतीत्यर्थः। तेषांजीवेशाभेदसाक्षात्कारवतां शाश्वतीशांतिर्मोक्षसुखमाविर्भवति इतरेषांभेददर्शिनांन।की दृशंजीवम्। वालाग्रमात्रं केशाग्रप्रमाणं स्वरूपेणव्यापकत्वेऽपिऔपाधिकपरि

वालाग्रमात्रंहृदयस्यमध्येविश्वेदेवंजातवेदंवरेण्यम् ॥ मामात्म
स्थंयेऽनुपश्यंतिधीरास्तेषांशांतिःशाश्वतीनेतरेषाम् ॥ ४६ ॥

च्छेदवंतमित्यर्थः । कीदृशंमांविश्वेदेवं विश्वाधिष्ठानत्वाद्विश्वात्मकम्। एदंतत्वमार्षम्। जातोवेदो धनंयस्मात्तंजातवेदम्। "अग्नेः प्रजातंपरिषद्धिरण्यम्" इति श्रुतेः। वरेण्यंवरणीयम्। एवमौपाधिकभेदवतोरपिजीवेशयोस्तत्त्वंपदार्थशोधनपूर्वकमभेदेनभागत्यागलक्षणयामांपरमार्थभूतंभजतांमोक्षोभवतिनेतरेषामिति

निर्गलितोऽर्थः ॥ ४६ ॥ तस्यविवर्ताधिष्ठानत्वंनिगमयति ॥ अहमिति ॥ योनिं अधिष्ठानत्वेनसंभाव्यमानंशुक्त्यादिकमहमेवाधितिष्ठामि । शुक्त्याद्युपहितो ऽहमेवरजताद्यधिष्ठानमित्यर्थः । मायाधिष्ठानभूतेनेदं पंचविधंपंचभूतात्मकं सर्वं पूर्णं धृतमित्यर्थः॥इत्थमुक्तरीत्याविचार्यमाणंमामेतिप्राप्नोति ब्रह्मैवभवतीत्यर्थः ।

अहंयोनिमधितिष्ठामिचैकोमयेदंपूर्णंपंचविधंचसर्वम् ॥ मामी शानंपुरुषंदेवमित्थंविचार्यमाणंशांतिमत्यंतमेति ॥ ४७ ॥ प्रा णेष्वंतर्मनसोलिंगमाहुर्यस्मिन्नशनायाचतृष्णाक्षमाच ॥ तृष्णां छित्वाहेतुजालस्यमूलं,बुद्ध्याचित्तंस्थापयित्वामयीह ॥

कीदृशंमाम् अत्यंतं शांतिंप्र[illegible]ोपशममित्यर्थः ॥ ४७ ॥ प्राणेष्विति ॥ य स्मिन्मनसिअशनाया अशनविषयिणीच्छास्ति । "अशनायोदन्य-" इतिनि पातनादशनायारूपसिद्धिः । तथायस्मिन्मनसितृष्णाअक्षमाचास्ति तादृशस्य

मनसोलिंगम् । प्राणेषुवायुषुबहिरिंद्रियेषुचवृत्तिरूपमाहुः । अंतःकरणपरिणामरूपाः कामादयोऽन्यत्राप्यध्यस्यंतइत्यर्थः।तस्मान्मनोनिग्रहएवकार्यइत्याह॥ तृष्णांछित्वेति ॥ कीदृशींतृष्णां हेतुजालस्यमूलम् शुभाशुभफलहेतूनांधर्माधर्मादीनां संघस्यमूलम्।अतएव "कामः संकल्पोविचिकित्सा" इतिश्रुतौकामएवादौ पठितः । तृष्णाजयानंतरंकर्तव्यमाह ॥ बुद्ध्येति ॥ इहमयिचित्तंबुद्ध्याऽव्यवसाया

एवंमांयेध्यायमानाभजंतेतेषांशांतिःशाश्वतीनेतरेषाम् ४८ यतोवाचो निवर्तंतेअप्राप्यमनसासह ॥ आनंदंब्रह्ममांज्ञात्वानबिभेतिकुतश्चन ४९

त्मिकयास्थापयित्वा । एवंपूर्वोक्तरीत्याध्यायमाना ध्यायंतः । चानश्नतुशानच् । ध्यैधातोः परस्मैपदित्वात् । एवंयेमांभजंतेतेषामेवशांतिर्मोक्षइतिभावः ॥ ४८॥ यतोवाचइति॥ यतोयस्माद्ब्रह्मणः नन्वेवंसतिऔपनिषदत्वंभज्येतेत्याशंक्याह ॥अप्राप्येति॥ अभिधावृत्तिमप्राप्येत्यर्थः । तथाचतत्त्वंपदयोर्जडांशपरित्यागेनल

क्षणयाअखंडार्थबोधकत्वाभ्युपगमान्नकश्चिद्दोषः । मनसासहेत्यपरिपक्कमनसा सहेतितदर्थः । " मनसैवानुद्रष्टव्यं " इतिश्रुतेः । " तत्रकोमोहः कःशोकएक त्वमनुपश्यतः " इतिश्रुतेः ॥ ४९ ॥ श्रुत्वेति ॥ केवलस्यभावः कैवल्यंनिष्प्रपं

श्रुत्वेतिदेवामद्वाक्यं कैवल्यज्ञानमुत्तमम् ॥ जपंतोमम
नामानिममध्यानपरायणाः ॥ ५० ॥ सर्वेतेस्वस्वदेहां
तेमत्सायुज्यंगताःपुरा ॥ ततोयेपरिदृश्यंतेपदार्थामद्वि
भूतयः॥ ५१ ॥ मय्येवसकलंजातंमयिसर्वंप्रतिष्ठितम् ॥
मयिसर्वंलयंयातितद्ब्रह्माद्वयमस्म्यहम् ॥ ५२ ॥

चमात्मस्वरूपंतज्ज्ञायतेऽनेनेतिकैवल्यज्ञानं शुद्धब्रह्मप्राप्तिसाधनंज्ञानमित्यर्थः। ॥५०॥ततः कारणात् येयेपदार्थादृश्यंतेतेतेसर्वेऽपिममविभूतयः। यच्छब्दबलात्त च्छब्दोऽध्याहार्यः ॥५१॥ उक्तमर्थंकैवल्योपनिषत्संवादेनद्रढयति ॥ मय्येवेति॥

यावदध्यायसमाप्ति ॥५२॥ अणोरणीयानिति ॥ सूक्ष्मादप्यतिसूक्ष्मः औपाधिकपरिच्छेदवानित्यर्थः ।महानितिस्वरूपतोऽपरिच्छिन्नः। विशुद्धः प्रपंचमिथ्यात्वात्तल्लेपरहितः। नह्यारोपितेनारुणिम्नास्वाभाविकं स्फटिकस्वच्छत्वमपैतीति भावः। पुरातनादिभिश्चतुर्भिर्विशेषणैर्व्यवह्रियमाणोऽहमेवास्मीतिसंबंधः॥५३॥

अणोरणीयानहमेवतद्वन्महानहंविश्वमहंविशुद्धः ॥ पुरातनोऽहंपुरुषोऽहमीशोहिरण्मयोऽहंशिवरूपमस्मि॥ ५३ ॥ अपाणिपादोऽहमचिंत्यशक्तिः पश्याम्यचक्षुःसशृणोम्यकर्णः ॥ अहं विजानामिविविक्तरूपोनचास्तिवेत्ताममचित्सदाहम् ॥ ५४ ॥

॥ अपाणीति ॥ ननुकारणाभावेकथंकार्यंघटेतेत्याशंक्याह ॥ अचिंत्यशक्तिरिति ॥ अचिंत्यशक्तिमत्त्वैवसर्वमुपपद्यतइतिभावः ॥ विविक्तमनावृतंरूपंयस्यतथाभूतोऽहंविजानामि स्वरूपज्ञानेनैवद्रष्टाहंनतुवृत्तिबलेनेतिभावः। ममकश्चि

दपिवेत्तानास्तिफलव्याप्यत्वाभावात् ॥ ५४ ॥ वेदैरिति ॥ सर्वैर्वेदैरहमेववेद्यः समधिगम्यइत्यर्थः । वेदांतानांकर्ताहमेव । समस्तवेदवेत्ताचाहमेव । अयंभावः । यदासगुणईश्वरोऽहं समस्तवेदानांतदाकर्तावेदवेद्यश्चाहमेव । वेदकर्तृत्वंच "यस्यनिश्वसितंवेदाऋचः सामानिजज्ञिरे" इत्यादिप्रमाणात् । निर्गुणस्तुवेदांत

वेदैरशेषैरहमेववेद्योवेदांतकृद्वेदविदेवचाहम् ॥ नपुण्य
पापेमयिनास्तिनाशोनजन्मदेहेंद्रियबुद्धयश्च ॥ ५५ ॥

जन्यकृतिविषयएव नतुफलव्याप्तः । वृत्तिव्याप्यतानंगीकारे "तंत्वौपनिषदंपुरुषंपृच्छामि" शास्त्रयोनित्वादित्यादिविरोधःस्यात् । उक्तंचवार्तिककृद्भिः । "फलव्याप्यत्वमेवात्रशास्त्रकृद्भिर्निवार्यते ॥ ब्रह्मण्यज्ञाननाशायवृत्तिव्याप्यत्वमिष्यते" इति । ब्रह्मण्याविद्यकधर्मानपवदति ॥ नपुण्यपापेइति ॥ ५५ ॥

नभूमिरिति ॥ गुहायामज्ञानेशेतइतितम्। "योवेदनिहितंगुहायां" इतिश्रुतेः। निष्कलंनिर्विकारं अद्वितीयंसजातीयादिभेदरहितम् । समस्तसाक्षिं साक्षीत्या ख्यायमानःसाक्षिः । कर्मण्यौणादिकइत् । सदसद्भ्यांकार्यकारणाभ्यांरहितम्

नभूमिरापोनचवह्निरस्तिनचानिलोमेऽस्तिनमेनभश्च॥ एवंविदित्वापरमात्मरूपंगुहाशयंनिष्कलमद्वितीयम् ॥ समस्तसाक्षिंसदसद्विहीनंप्रयातिशुद्धंपरमात्मरूपम् ॥ ५६ ॥ एवंमांतत्त्वतोवेत्ति यस्तुराममहामते ॥ सएवनान्योलोकेषुकैवल्यफलमश्नुते ॥५७॥

इति श्रीपद्मपुराणेशिवगीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे शिवराघवसंवादे विभूतियोगोनाम षष्ठोऽध्यायः ॥ ६ ॥

॥५६॥ उपसंहरति ॥ एवमिति ॥ नान्यइति ॥ कर्ममात्रासक्तोवा सगुणोपासनासक्तोवा नमोक्षभागित्यर्थः। नचैवं कर्मणामुपासनानांचवैयर्थ्यम्। विविदिषा

संपादनद्वारासार्थक्यात् उपासनानामपिज्ञानांगत्वाच्चसार्थक्यात् ॥५७॥ इति श्रीलक्ष्मीनृसिंहपंडितसूनुहरिदीक्षितकृतौशिवगीताटीकायांबालानंदिन्यांषष्ठोऽध्यायः॥ ६ ॥ पूर्वाध्याये मूर्तस्त्वंतुपरिच्छिन्नाकृतिरित्यारभ्य त्वंकथंपंचभूतादिजगदेतच्चराचरमिति यत्पृष्टंतत्रत्वयाआख्यायिकैवकथिता नत्वनुभवारूढं यथा

॥ श्रीरामउवाच ॥ भगवन्यन्मयापृष्टंतत्तथैवस्थितंविभो ॥ अत्रोत्तरंमयालब्धंत्वत्तोनैवमहेश्वर ॥ १ ॥ परिच्छिन्नपरीमाणेदेहेभगवतस्तव ॥ उत्पत्तिःसर्वभूतानांस्थितिर्वाविलयःकथम् ॥ २ ॥

स्यात्तथोत्तरंदत्तमिति शिवंस्मारयन् रामउवाच॥ भगवन्निति ॥संशयबीजमिदं पूर्वाध्यायेऽहंसर्वाधिष्ठानमितिभगवतोक्तं तत्राहंकारावच्छिन्नस्यसर्वाधिष्ठानत्वे जीवेनकिमपराद्धं सोऽपिसर्वाधिष्ठानंस्यात्।भवतुनामेतिचेत्। नियम्यनियामकत्वभंगःशास्त्रानर्थक्यंचप्रसज्येयातामिति ॥१॥ तदेवाह ॥ परिच्छिन्नेति ॥ परि

च्छिन्नंपरीमाणंयस्यतथाभूतेदेहे । " उपसर्गस्यघञि- " इतिसूत्रेबहुलग्रहणा दीर्घः । सर्वभूतानामुत्पत्त्यादिकंकथंघटेत । नहिघटेपर्वतादयोमांतीतिभावः॥२॥ स्वस्वेति ॥ स्वैस्वैरधिकारैःसंयुक्ताःसुराइंद्रादयः परिच्छिन्नपरिमाणेतवदेहेक थंवास्थिताः। तेषांस्वस्वाधिकारानुसारेणतथातथावकाशस्यापेक्षितत्वात् । किंच

स्वस्वाधिकारसंबद्धाःकथंनामास्थिताःसुराः॥ तेसर्वेत्वंकथं
देवभुवनानिचतुर्दश ॥ ३ ॥ त्वत्तःश्रुत्वापिदेवात्रसंदेहोमे
महानभूत ॥ अप्रत्यायितचित्तस्यसंशयंछेत्तुमर्हसि ॥ ४ ॥

तेसर्वेदेवास्त्वंतथाचतुर्दशभुवनानिचत्वमिति कथमभेदःसंभवति । यावदुपाधिबिं बप्रतिबिंबयोरभेदासंभवात् । भुवनैर्जडैःसहाभेदासंभवाच्च । तस्माद्यदुक्तंतन्नसं गच्छतइतिभावः॥३॥ त्वत्तइति ॥ त्वत्तःश्रुत्वापिश्रवणानंतरमपिमेममास्मिन्नर्थे त्वमेवसर्वमित्यस्मिन्नर्थेसंदेहोऽभूज्जातइत्यर्थः । अप्रत्यायितंनिश्चयमप्रापितं

चित्तंयस्यतथा भूतस्यमेसंशयमपाकुर्वित्यर्थः ॥ ४ ॥ एवंपृष्टःसन् प्रथमंयुक्त्यास
माधातुं भगवानुवाच ॥ वटबीजइति ॥ सुतरांसूक्ष्मेऽपिवटस्यबीजेसर्वदामहा
न्वटतरुर्यथास्तेतद्वन्ममतनौभूतानामागत्यादिर्भवतीतियोजनीयम् । एतेनप्राग
सदेवघटादिकार्यमुत्पद्यतइतिवदंतस्तार्किकाः परास्ताः । अन्यथेतिसूक्ष्मरूपा

श्रीभगवानुवाच ॥ वटबीजेसुसूक्ष्मेऽपिमहावटतरुर्यथा॥ सर्वदा
स्तेऽन्यथावृक्षःकुतआयातितद्वद ॥ तद्वन्ममतनौरामभूताना
मागतिर्लयः ॥ ५ ॥ महासैंधवपिंडोऽपिजलेक्षिप्तोविलीयते ॥

नभ्युपगमे वृक्षः कुतोहेतोरायातितद्वदेतिसंबंधः अयंभावः । असतोह्युत्पत्तौश
शशृंगमपिउत्पद्येत। अविशेषादिति । "नासतोविद्यतेभावोनाभावोविद्यतेसतः"
इतिस्मृतेः । अत्रार्थेदीक्षितटीकायांविस्तरः ॥ ५ ॥ पूर्वंसतोऽपिघटादेरनुपलं
भेदृष्टांतमाह ॥ महासैंधवेति ॥ महानपिसैंधवपिंडः । जलेक्षिप्तःसन्विलीयतेसू

क्ष्मावस्थापन्नोभवति। ततोनदृश्यते। पुनःपाकात्स्थूलावस्थापन्नउत्पद्यतइत्युच्य तइति। तद्वत्सर्वंकार्यंपूर्वंसदेवोत्पद्यतइतिभावः ॥६॥ प्रातरिति ॥ आलोकआ तपः। उपसंहरति॥ एवमिति॥ एवंसूर्यादालोकवन्मत्तोजगज्जायते तद्वत्सूर्यालो

नदृश्यतेपुनःपाकात्ततआयातिपूर्ववत् ॥ ६ ॥ प्रातःप्रातर्यथालोको जायतेसूर्यमंडलात् ॥ एवंमत्तोजगत्सर्वंजायतेऽस्तिविलीयते ॥ मय्ये वसकलंरामतद्वज्जानीहिसुव्रत ॥७॥ श्रीरामउवाच ॥ कथितेऽपिमहा भागदिग्जडस्ययथादिशि ॥ निवर्ततेभ्रमोनैवतद्वन्ममकरोमिकिम् ॥ ८ ॥ श्रीभगवानुवाच ॥ मयिसर्वंयथारामजगदेतच्चराचरम् ॥

कवन्मय्येवास्तिविलीयतेचेतिजानीहि ॥७॥ एवंदृष्टांतेनप्रतिपादितेऽप्यर्थेनिश्च यमलभमानः श्रीरामउवाच॥ कथितेऽपीति॥ दिग्जडस्यदिङ्मूढस्यभ्रमोनैवनि वर्तते। तद्वन्ममदीयोभ्रमइत्यर्थः॥८॥ यद्यपिशुद्धंपूर्णंब्रह्मैवजगदधिष्ठानं नतुली

लाविग्रहविशिष्टं तथापितद्द्वारोद्बोधनीयमित्याशयेनाहभगवान्॥ मयीति ॥९॥
दिव्यमिति ॥ युगपत्सकलपरोक्षापरोक्षविषयदर्शनसामर्थ्यं दिव्यं चक्षुरित्युप
चर्यते। तत्तुभ्यंदास्यामीत्यन्वयः ॥ १० ॥ मदनुग्रहंविनादर्शयिष्यमाणंमामकं

वर्ततेतद्दर्शयामिनद्रष्टुंक्षमतेभवान् ॥९॥ दिव्यंचक्षुःप्रदास्यामितु
भ्यंदशरथात्मज॥ तेनपश्यभयंत्यक्त्वामत्तेजोमंडलंध्रुवम्॥१०॥
नचर्मचक्षुषाद्रष्टुंशक्यतेमामकंमहः॥ नरेणवासुरेणापितन्ममानु
ग्रहंविना॥११॥सूतउवाच॥इत्युक्काप्रददौतस्मैदिव्यंचक्षुर्महेश्वरः॥
अथादर्शयदेतस्मैवक्त्रंपातालसन्निभम्॥१२॥विद्युत्कोटिप्रतीकाश
मतिभीमंभयावहम्॥ तद्दृष्ट्वैवभयाद्रामोजानुभ्यामवनिंगतः॥१३॥

महस्तेजःकेनापिद्रष्टुंदुःशकमित्याह ॥ नेति ॥ ११ ॥ १२ ॥ विद्युदिति ॥
अतिभीमभयावहं अतिभयंकराणामपिभयप्रदमित्यर्थः॥ १३ ॥ ॥ ॥ ॥

॥ १४ ॥ चटकाः कलविंकाइव ॥ १५ ॥ मेरुमंदरेति ॥ पूर्वेयेपरमेश्वरस्यसमं ताहृष्टास्तेदेवाइत्यर्थः॥१६॥ महाभागेतिशौनकंप्रतिसंबुद्धिः॥१७॥सुरासुरेति॥

प्रणम्यदंडवद्भूमौतुष्टावचपुनःपुनः॥ अथोत्थायमहावीरोयाव देवप्रपश्यति॥१४॥ वक्त्रंपुरभिदस्तावदंतर्ब्रह्मांडकोटयः॥चट काइवलक्ष्यंतेज्वालामालासमाकुलाः ॥१५॥ मेरुमंदरविंध्या द्यागिरयःसप्तसागराः॥ दृश्यंतेचंद्रसूर्याद्याःपंचभूतानितेसुराः ॥१६॥ अरण्यानिमहानागाभुवनानिचतुर्दश॥ प्रतिब्रह्मांडमे वंतुदृष्ट्वादशरथात्मजः॥१७॥ सुरासुराणांसंग्रामांस्तत्रपूर्वाप रानपि ॥ विष्णोर्दशावतारांश्चतत्कर्तव्यान्यपिद्विजाः ॥१८॥



पूर्वापरान् जातान्जनिष्यमाणांश्चेत्यर्थः। तत्कर्तव्यानीति तेष्ववतारेषुकर्तव्या

निरावणवधादीनिच ॥ १८ ॥ पराभवानिति ॥ दैत्येभ्यइतिशेषः। पुरदाहंत्रि
पुरसंहारम् ॥ १९ ॥ प्रतिब्रह्मांडंपूर्वोक्तंसर्वंदृष्ट्वाउत्पन्नतत्त्वज्ञानोऽपि दृश्यमा
नस्याघटितरूपतयादृष्टांतेनपूर्वानुभूतप्रपंचस्यापिमिथ्यात्वं ब्रह्मणोनिर्गुणत्वंका

पराभवांश्चदेवानांपुरदाहंमहेशितुः॥ उत्पद्यमानानुत्पन्नान्सर्वानपि
विनश्यतः॥ १९ ॥ दृष्ट्वारामोभयाविष्टःप्रणनाममुहुर्मुहुः ॥ उत्पन्नत
त्त्वज्ञानोऽपिबभूवरघुनंदनः ॥ २० ॥ अथोपनिषदांसारैरर्थैस्तुष्टावशं
करम् ॥२१॥ श्रीरामउवाच॥ देवप्रपन्नार्तिहरप्रसीदप्रसीदविश्वेश्वरवि
श्ववंद्य ॥ प्रसीदगंगाधरचंद्रमौलेमांत्राहिसंसारभयादनाथम् ॥ २२ ॥

लत्रयाबाध्यत्वंचेतितत्त्वज्ञानम् । उत्पन्नंतत्त्वज्ञानंयस्यसतथा एवंभूतोबभूवेति
संबंधः ॥ २० ॥ अथेति ॥ उपनिषदांमध्येसारभूतैः। अर्थैरर्थप्रतिपादकैःश्लोकै
रित्यर्थः ॥ २१ ॥ त्राहित्रायस्वेत्यर्थः । त्राहीत्यार्षंरूपम् ॥ २२ ॥ ॥ ॥

त्वत्तइति ॥ उपादानत्वंनिमित्तत्वंचपंचम्यर्थः । "सोकामयतबहुस्यांप्रजायेयेति" इतिश्रुतेः । उभयस्यचेहसंभवात् । कार्यमात्रोत्पत्तिस्थितिलयानामुपादानमेवशरणमिति दृष्टांतेनद्रढयति ॥ भूमाविति ॥ २३ ॥ ब्रह्मेंद्रेति ॥ वरुणा

त्वत्तोहिजातंजगदेतदीशत्वय्येवभूतानिवसंतिनित्यम् ॥
त्वय्येवशंभोविलयंप्रयांतिभूमौयथावृक्षलतादयोऽपि॥२३॥
ब्रह्मेंद्ररुद्राश्चमरुद्गणाश्चगंधर्वयक्षासुरसिद्धसंघाः ॥ गंगा
दिनद्योवरुणालयाश्चवसंतिशूलिंस्तववक्त्रमंति ॥ २४ ॥
त्वन्माययाकल्पितमिंदुमौलेत्वय्येवदृश्यत्वमुपैतिविश्वम्॥

लयाःसमुद्राः । ब्रह्मादयःसर्वेतववक्त्रमंतिवक्त्रस्यसमीपेमध्येइतियावत् । अंतिशब्दोऽतिकपर्यायोवेदेप्रसिद्धः । "यदंतियच्चदूरके" इत्यादौ । यद्यपिअंतिकयोगेपंचम्याषष्ठ्यावाभाव्यंतथाप्यार्षोविभक्तिव्यत्ययः ॥ २४ ॥ ननुब्रह्मणोजग

दुपादानत्वेसविकारत्वंस्यादित्याशंक्य तत्रपरिणामवादएव नविवर्तवादइतिप्र
तिपादयन्नाह॥त्वन्माययेति॥ जनःएतद्विश्वंत्वयिभ्रांत्यातथापश्यति। यथाशु
क्तौरूप्यम्।नन्वन्यत्रदृष्टस्यान्यत्रभानंहिभ्रमः। यथारजतंहट्टादौदृष्टंशुक्तिकायां
संस्कारेणप्रतीतंभ्रमइत्युच्यते। इयमेवान्यथाख्यातिः। ब्रह्मविनाविश्वंकुत्रदृष्टं
तदधुनाब्रह्मणिप्रतीतमितिभ्रमत्वेनोच्यतइत्याशंक्याह॥त्वन्माययेति॥त्वन्मा

भ्रांत्याजनःपश्यतिसर्वमेतच्छुक्तौयथारूप्यमहिंचरज्जौ॥२५॥

ययात्वय्येवकल्पितंत्वय्येवदृश्यत्वमुपैति नान्यत्रेतिभावः। नवयमन्यथाख्यातिवा
दिनोनाप्यसत्ख्यातिवादिनः किंत्वनिर्वचनीयख्यातिवादिनः। तथाचमायया
सर्वमुपपादयितुंसुशकम्। नचसिद्धांतेजगतःक्वचिदप्यननुभवादारोप्यप्रमाहित
संस्काराभावे कथंब्रह्मण्यारोपइतिवाच्यम्।राघवेनारोप्यविषयसंस्कारत्वेनैवत
स्यहेतुत्वात्। नचप्राथमिकारोपेकागतिरितिवाच्यम्। संसारप्रवाहस्यानादि

त्वात् । तदुक्तम् "आरोपेसतिनिमित्तानुसरणंनहिनिमित्तमस्तीत्यारोपः" इति । तस्मादिहैवाविद्ययाकल्पितमित्यभ्युपेयम् । तदुक्तम् " अक्षमाभवतःकेयंसाधकत्वंप्रकल्प्यते ॥ किंनपश्यतिसंसारंतत्रैवाज्ञानकल्पितम् " इतिदिक् ॥२५॥ परमतेऽन्यथाख्यात्यसत्ख्यात्योरपरोक्षतानुपपत्तिंध्वनयन्सिद्धांतेऽपरोक्षतांसमर्थयते ॥ तेजोभिरिति ॥ समस्तंजगत् तेजोभिरापूर्यव्याप्यप्रकाशमानस्त्वं प्रका

तेजोभिरापूर्यजगत्समग्रंप्रकाशमानःकुरुषेप्रकाशम् ॥
विनाप्रकाशंतवदेवदेवनदृश्यतेविश्वमिदंक्षणेन ॥ २६ ॥

शतइतिप्रकाशस्तंकुरुषे। तवप्रकाशंविनामिथ्याभूतंजगन्नदृश्येत। किंच इदंविश्वंक्षणेननदृश्यते । अधिष्ठानसाक्षात्कारेसतीतिशेषः। अयंभावः। वियदाद्युपहितचैतन्येन तादात्म्यापन्नंवियदादिप्रकाशते "तस्यभासासर्वमिदंविभाति" इतिश्रुतेः । प्रमातृचैतन्यंविषयचैतन्यंप्रमाणचैतन्यंचयत्राभिन्नंभवतितत्रैवविष

यापरोक्षंभवति । अतएवघटंसाक्षात्करोमि वह्निमनुमिनोमीत्यनुव्यवसायः । तच्चापरोक्षत्वंदेशांतरीयस्यतुच्छस्यचनसंभवतीतिभावः ॥ २६ ॥ प्रपंचस्यमिथ्यात्वंयुक्त्यंतरेणापिसाधयति ॥ अल्पेति ॥ अल्पश्चासावाश्रयश्चसतथा स्वस्वापेक्षयाबृहंतमर्थंनधत्ते । अत्रदृष्टांतः । एकोऽणुर्विंध्यशैलंनहिधत्तइति । ततः

अल्पाश्रयोनैवबृहंतमर्थंधत्तेऽणुरेकोनहिविंध्यशैलम् ॥ तद्द
क्मात्रेजगदेतदस्तित्वन्माययैवेतिचनिश्चिनोमि ॥ २७ ॥
रज्जौभुजंगोभयदोयथैवनजायतेनास्तिनचैतिनाशम् ॥

किंतत्राह । एतज्जगद्दक्मात्रेअस्ति । तस्मात्वन्माययैवक्तंननतुवास्तवमितिनिश्चिनोमि । तदुक्तम् "दुर्घटैकविधायिन्यांमायायांकाचमत्कृतिः" इति ॥२७॥ ननुप्रपंचस्यमिथ्यात्वेअर्थक्रियाकारित्वंनस्यात् । तथाचतद्बंधनिवृत्त्यर्थंशास्त्रमनारभ्यंस्यादित्याशंक्याह ॥ रज्जाविति ॥ यथारज्जौभुजंगोवस्तुतोनजायते

अतएवनाशंचनैति। "जातस्यहिध्रुवोमृत्युः" इतिस्मृतेः। तथापिभयदः अर्थ क्रियाकारीत्यर्थः। तथात्वन्माययाकेवलंत्वयिआत्तरूपंप्राप्तरूपंकल्पितमितियावत्। सदसद्विलक्षणस्वरूपमित्यर्थः। एवंभूतंजगदपिकार्यक्षमंभवतीत्यर्थः। प्रातिभासिकस्यापिरज्जुसर्पादेरर्थक्रियाकारित्वमस्ति किमुतव्यावहारिकस्येतिभा

त्वन्माययाकेवलमात्तरूपंतथैवविश्वंत्वयिनीलकंठ ॥२८॥
विचार्यमाणेतवयच्छरीरमाधारभावंजगतामुपैति ॥ तद
प्यवश्यंमदविद्ययैवपूर्णश्चिदानंदमयोयतस्त्वम् ॥ २९ ॥

वः। तस्मात्तदुच्छेदायशास्त्रमारंभणीयमेवेतिभावः ॥ २८॥ ननुप्रपंचस्यमिथ्यात्वेतदधिष्ठानस्यमद्विग्रहस्यापिमिथ्यात्वापत्तौ तत्रविश्वमध्यस्तमितिकथंब्रुवेव्याघातादित्याशंक्य त्वद्देहेनोपलक्षितचिन्मात्राभिप्रायेणेदंब्रुवइत्याह ॥ विचार्यमाणइति ॥ यदिदंतवशरीरंजगतामाधारभावमुपैति तदप्यविचाररमणीय

मेव । विचार्यमाणेतुतच्छरीरंममाविद्ययैवकल्पितं त्वंतुपूर्णश्चिदानंदरूपएव। तथाचेदंविग्रहादिकमप्यध्यस्तमितिभावः ॥ २९ ॥ नन्वेवंब्रह्मभिन्नस्यसर्वस्यापिमिथ्यात्वे कर्मकांडादिश्रुतिरपिमिथ्यार्थबोधकास्यादित्याशंक्य समाधत्ते ॥ पूजेति ॥ पूजादीनामितिशेषः। इष्टंयागः पूर्तंतडागारामादि। तथावरक्रियाणां दानाध्ययनादीनां फलंस्वर्गादि तच्चफलंभोक्तुर्यज्वादेस्त्वंयच्छसि। "फलवतउप

पूजेष्टपूर्तादिवरक्रियाणांभोक्तुः फलंयच्छसिशस्तमेव ॥
मृषैतदेवंवचनंपुरारेत्वत्तोऽस्तिभिन्नंनचकिंचिदेव ॥३०॥

पत्तेः" इतिन्यायात्। अयंभावः। यावदविद्यंभेदवासनावासितानांकर्मकांडादिश्रुतिप्रतिपादितंसर्वंशस्तमेव प्रमाणमेवेत्यर्थः । महतापुण्योदयेनोत्पन्नब्रह्मसाक्षात्कारस्य हेपुरारे किंचिदेवकिमपिप्रपंचजातं त्वत्तोभिन्नंनास्तीतिपश्यतस्तत्त्वज्ञानवतोदृष्ट्या एतत्पूर्वार्धप्रतिपादितार्थकम् । एवंतज्जातीयमन्यच्चवचनंमृषेत्य

न्वयः। तथाचश्रुतिः। "किमर्थावयमध्येष्यामहेकिमर्थावयंयक्ष्यामहे" इति स्मृतिश्च। "नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन" इति। "ननिरोधोनचोत्पत्तिर्नबंधोनचसाधकः। नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता" इतिश्रुत्यंतराच्च ३० अविद्यावद्विषयकाणिशास्त्राणीत्याह ॥ अज्ञानेति ॥ अज्ञानेनमूढाश्चतेअमननशीलाश्चतेचतथोक्ताः पुरुषाः पूजादिभिर्बहिःक्रियाभिर्गिरीशस्तोषंभजतीति

अज्ञानमूढामुनयोवदंतिपूजोपचारादिबहिःक्रियाभिः ॥ तोषं
गिरीशोभजतीतिमिथ्याकुतस्त्वमूर्तस्यतुभोगलिप्सा ॥ ३१ ॥

वदंति। अविद्यादशामाश्रित्यप्रतिपादयंतीत्यर्थः। तच्चज्ञानदृष्ट्यामिथ्या तोषस्य मायावृत्तिरूपत्वात्। अमूर्तस्यपूर्णस्यानंदरूपस्यभोगानांलिप्साकुतः कस्मादपिहेतोर्नैवेतिभावः। अज्ञैस्तुयथोक्तंसर्वंकार्यमेव। "धर्मेणपापमपनुदति" इत्यादिश्रुतेः। "नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोऽश्नुते" इत्यादिस्मृतेश्च ॥ ३१ ॥

अस्यैवप्रपंचः ॥ किंचिदिति ॥ दलंतुलसीबिल्वादिपत्रं चुलकपरिमितमुदकंवा यत्त्वंप्रतिगृह्यभक्तजनादितिशेषः । त्रैलोक्यलक्ष्मींयज्जनेभ्यःदत्से तत्सर्वंअविद्याकृतमेवमिथ्यैवेतिमन्येनिश्चिनोमि । दातृसंप्रदानदेयादीनामाविद्यकत्वादितिभावः ॥ ३२ ॥ व्याप्नोषीति ॥ एकःसजातीयविजातीयस्वगतभेदशून्यः

किंचिद्दलंवाचुलकोदकंवायत्त्वंमहेशप्रतिगृह्यदत्से ॥ त्रैलोक्यलक्ष्मीमपितज्जनेभ्यःसर्वंत्वविद्याकृतमेवमन्ये ॥ ३२ ॥
व्याप्नोषिसर्वांविदिशोदिशश्चत्वंविश्वमेकःपुरुषःपुराणः ॥ नष्टेऽपितस्मिंस्तवनास्तिहानिर्घटेविनष्टेनभसोयथैव॥३३॥

पुरुषः । सर्वस्मात्कार्यात्पूर्वमेवविद्यमानः। “पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम् ” इतिश्रुतेः। त्वंविश्वंव्याप्नोषि अधिष्ठानत्वेनतादात्म्यापन्नः सन्ननुगच्छसि । तस्मिन्विश्वस्मिन्नष्टेऽपितवहानिर्नास्ति । अत्रदृष्टांतः। घटेविनष्टेयथैव

नभसोहानिर्नास्ति रजतादिबाधेऽपिशुक्त्याद्यवस्थानदर्शनात्। तस्मात्त्वमेवसाक्षात्करणीयः किंविषयमृगतृष्णयेतिभावः॥ ३३ ॥ ननूक्तरीत्यावियदादेर्मिथ्यात्वेजीवानांबहुत्वादद्वैतक्षतिःस्यादेव। नहिवियदादिवज्जीवोऽपिमिथ्येतियुक्तम्। बंधमोक्षयोर्वैयधिकरण्यापत्तेरित्याशंक्याह ॥ यथेति ॥ हेदेव यथाकाशगमेकमेवार्कबिंबंक्षुद्रेषुजलान्वितेषुपात्रेष्वनेकप्रतिबिंबभावंभजति तथात्वमंतःकरणे

यथैकमाकाशगमर्कबिंबंक्षुद्रेषुपात्रेषुजलान्वितेषु ॥ भजत्यनेकप्रतिबिंबभावंतथात्वमंतःकरणेषुदेव ॥ ३४ ॥

ष्वनेकप्रतिबिंबभावंभजसि। तथाचश्रुतिः। "यथाह्ययंज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोऽनुगच्छन्। उपाधिनाक्रियतेभेदरूपोदेवः क्षेत्रेष्वेवमजोऽयमात्मा" इति। तथाचोपाधीनांमिथ्यात्वेऽपिनोपहितस्यमिथ्यात्वमतोनबंधमोक्षयोर्वैयधिकरण्यम्। औपाधिकभेदस्यमिथ्यात्वान्नाद्वैतभंगइतिभावः ॥ ३४ ॥

नन्वेवंपरमार्थतोजीवब्रह्मणोरविशेषेजीववदीश्वरोऽपिसंसारी किंनस्यादित्याशंक्याह ॥ सुसर्जनइति ॥ विश्वस्यसृष्ट्यादिषुसत्सुतत्प्रयुक्तंकार्यंतवकिमपिनास्ति पूर्णकामत्वात् । तथापिअनादिभिः प्रवाहरूपैर्देहरूपैर्देहभृतांजीवानामदृष्टैः सहकारिभूतैः स्वप्नवत्स्वर्गादीनातनोषि । तथातत्रजीवेशयोर्बिंबप्रतिबिंबभा

सुसर्जनेवाप्यवनेविनाशेविश्वस्यकिंचित्तवनास्तिकार्यम् ॥ अ
नादिभिर्देहभृतामदृष्टैस्तथापितत्स्वप्नवदातनोषि ॥ ३५ ॥
स्थूलस्यसूक्ष्मस्यजडस्यदेहद्वयस्यशंभोनचिदंविनास्ति ॥ अ
तस्त्वदारोपणमातनोतिश्रुतिःपुरारेसुखदुःखयोःसदा ॥ ३६ ॥

वकृतोविशेषइतिभावः ॥ ३५ ॥ तदेवमीश्वरस्यानिरावरणंप्रतिपाद्यजीवस्यसावरणत्वंप्रतिपादयति ॥ स्थूलस्येति ॥ स्थूलस्यपंचीकृतमहाभूतकार्यस्य सूक्ष्मस्यापंचीकृतमहाभूतकार्यस्यलिंगाख्यस्यच देहस्य अंविना अततीत्यःआत्मा

अतसातत्यगमने तंविना चितूचेतनत्वंनास्ति। किंभूतस्यदेहद्वयस्यजडस्यकाष्ठरूपस्येत्यर्थः। साचितूयदिदेहद्वयस्यपरिणामभूतास्यात्तर्हिजडःस्यात्। यस्माच्चित्तादात्म्यापन्नत्वेनदेहद्वयस्यचित्त्वम्।अतःकारणाद्देहद्वयजन्ययोःसुखदुःखयोः श्रुतिस्त्वदारोपणं त्वयिप्रतिबिंबभूतेआरोपणमातनोतिप्रतिपादयतीत्यर्थः। अयोयोगाद्वह्नेस्ताडनादिवत्। वह्नियोगादयसोदग्धृत्वादिवत्। तथाचश्रुतिः।

नमःसच्चिदंभोधिहंसायतुभ्यंनमःकालकंठायकालात्मकाय॥न
मस्तेसमस्ताघसंहारकर्त्रेनमस्तेमृषाचित्तवृत्त्यैकभोक्त्रे ॥३७॥

"द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते। तयोरन्यःपिप्पलंस्वाद्वत्यनश्नन्नन्योअभिचाकशीति" इत्यादिः। कर्ताशास्त्रार्थवत्त्वादित्यधिकरणमपीत्यनुसंधेयम्॥ ३६॥ एवमीश्वरसन्निधिवशादधिगतपरमार्थोऽपिपुनर्बाधितानुवृत्त्यनुवृत्तयाभक्त्यालीलाविग्रहायभगवतेनमस्कुर्वन्प्रार्थयते॥ **नमइति**॥ स

न्विदंभोधौहंसइवतस्मै । कर्पूरगौरतयाहंसत्वेनोत्प्रेक्षा । मृषाभूतानांचित्तवृत्ती
नांएकभोक्तेमुख्यसाक्षिणेइत्यर्थः ॥ ३७ ॥ एवमिति ॥ विस्मितःअदृष्टपूर्वत्वा
त् ॥ ३८ ॥ उपसंहरेति ॥ ३९ ॥ पश्येति ॥ पूर्वार्धेभगवद्वाक्यं उत्तरार्धमार

सूतउवाच ॥ एवंप्रणम्यविश्वेशंपुरतःप्रांजलिःस्थितः ॥ विस्मितः
परमेशानंजगदेरघुनंदनः ॥ ३८ ॥ श्रीरामउवाच ॥ उपसंहरविश्वा
त्मन्विश्वरूपमिदंतव ॥ प्रतीतंजगदैकात्म्यंशंभोभवदनुग्रहात् ३९
श्रीभगवानुवाच ॥ पश्यराममहाबाहोमत्तोनान्योऽस्तिकश्चन ॥ सूत
उ० ॥ इत्युक्त्वैवोपसंजह्रेस्वदेहेदेवतादिकान् ४० मीलिताक्षःपुनर्हर्षा
द्यावद्रामःप्रपश्यति ॥ तावदेवगिरेःशृंगेव्याघ्रचर्मोपरिस्थितम् ४१

भ्यसूतवाक्यम् । अतोनान्योऽस्तिकश्चन जगदाश्रयइत्यर्थः ॥ ४० ॥ मीलि
ताक्षइति ॥ लीलाविग्रहस्यमायिकत्वं क्रियातःप्रदर्शयितुंरूपांतरंस्थानांतर

माविःकृत्यस्थितमितिभावः ॥४१॥ ददर्शेति ॥ व्याघ्रचर्मैवाबरंतस्यधरम् । भू
तिर्भस्मऐश्वर्यंवा ॥ ४२ ॥ ४३ ॥ एकाकिनमिति ॥ मृगोहस्तेयस्यतम् । ख



ददर्शपंचवदनंनीलकंठंत्रिलोचनम्॥ व्याघ्रचर्मांबरधरंभूतिभूषितवि
ग्रहम् ॥४२॥ फणिकंकणभूषाढ्यंनागयज्ञोपवीतिनम् ॥ व्याघ्रचर्मोत्त
रीयंचविद्युत्पिंगजटाधरम्॥४३ एकाकिनंचंद्रमौलिंवरेण्यमभयप्रदम्॥
चतुर्भुजंखंडपरशुंमृगहस्तंजगत्पतिम् ॥४४॥ अथाज्ञयापुरस्तस्यप्रण
म्योपविवेशसः ॥ अथाहरामंदेवेशोयद्यत्प्रष्टुमभीच्छसि ॥ तत्सर्वंपृ
च्छरामत्वंमत्तोनान्योऽस्तितेगुरुः॥४५॥ इतिश्रीपद्मपुराणेशिवगीता
सूप॰ब्रह्म॰योग॰शिवराघव॰विश्वरूपदर्शनंनामसप्तमोऽध्यायः॥७॥

ट्वादेः परासप्तमीतिसाधुः ॥ ४४ ॥ अथेति ॥ गौतमीतीरस्थंस्वविग्रहादिकमुप
संहृत्यरामंगिरिशिखरस्थंज्ञात्वेत्यर्थः ॥ ४५॥ इतिश्रीलक्ष्मीनृसिंहपंडितसूनु

हरिदीक्षितकृतौशिवगीताटीकायां बालानंदिन्यांसप्तमोऽध्यायः ॥ ७ ॥ ॥
पूर्वाध्यायांतेशंभुनोक्तेयद्यत्प्रष्टुमभीच्छसि तत्सर्वंपृच्छरामत्वमितितद्देवोपजीव्य
स्वयमधिगततत्त्वोऽपि लोकानुग्रहार्थंविरक्तिसाधनंदेहादिनिःसारत्वं शिवमुखे
नैवप्रकटयितुंरामः पृच्छति ॥ पांचभौतिकेति ॥ देहेलिंगशरीरेपांचभौतिकदे

श्रीरामउवाच॥पांचभौतिकदेहस्यचोत्पत्तिर्विलयःस्थितिः॥स्वरू
पंचकथंदेहेभगवन्वक्तुमर्हसि॥१॥ श्रीभगवानुवाच॥ पंचभूतैःसमा
रब्धोदेहोऽयंपांचभौतिकः॥तत्रप्रधानंपृथिवीशेषाणांसहकारिता२

हस्यस्थूलस्यउत्पत्त्यादिकंकथंकेनप्रकारेणइदंवक्तुमर्हसीत्यन्वयः ॥ १ ॥ पंच
भूतैरिति ॥ अयमपरोक्षः प्राणिनांदेहः पांचभौतिकः पंचभूतानांपरिणामः ।
यतः पंचभूतैरारब्धः तत्रतस्मिन्देहेपृथिवीप्रधानंमुख्येत्यर्थः । वैशेष्यात्तद्वादइ
तिन्यायात् । एवमाप्येदेहादौद्रष्टव्यम् । शेषाइत्यर्थः । तदंशानामल्पीयस्त्वा

त्सहकारित्वमुक्तम् ॥ २ ॥ उद्भिनत्ति भूमिमित्युद्भिदः । इगुपधलक्षणः कप्र त्ययः ॥ ३ ॥ प्रधानत्वादिति । जरायुजंमनुष्यदेहंपुरुषार्थसाधनत्वेनमुख्यत्वा दितिभावः ॥ ४ ॥ शुक्रेति ॥ शुक्रशोणिताभ्यांसंभूताजातावृत्तिरुत्पत्तिर्यस्यस

जरायुजोऽण्डजश्चैवस्वेदजश्चोद्भिदस्तथा ॥ एवंचतुर्विधःप्रोक्तो देहोऽयंपांचभौतिकः ॥३॥ मानसस्तुपरःप्रोक्तोदेवानामेवसस्मृ तः॥ तत्रवक्ष्येप्रथमतःप्रधानत्वाज्जरायुजम् ॥ ४ ॥ शुक्रशोणित संभूतवृत्तिरेवजरायुजः ॥ स्त्रीणांगर्भाशयेशुक्रमृतुकालेविशेद्य दा ॥ रजसायोषितोयुक्तंतदेवस्याज्जरायुजम् ॥ ५ ॥

तथा । एवंभूतएवजरायुजोनतुतन्निरेपेक्षोत्पत्तिकइत्यर्थः । पूर्वश्लोकस्यैवशेषभूत मर्धमिदम् ॥ ५ ॥ स्त्रीणामिति ॥ गर्भआशेतेऽस्मिन्नितिगर्भाशयः पेशी सैवज रायुशब्दवाच्या । "गर्भाशयोजरायुःस्यात्" इत्यमरः। तस्मिन्गर्भाशयेशुक्रंऋ

तुकालेविशेत्तदायोषितःस्त्रियारजसाशोणितेनयुक्तंतदेवशुक्रंजरायुजंस्यात् ॥५॥
शुक्रशोणितयोरन्यतराधिक्येसतिजायमानंभेदविशेषमाह ॥ बाहुल्यादिति॥
नभ्राण्नपान्नवेदानासत्येतिनिपातनान्नपुंसकशब्दः साधुः॥ ६ ॥ ऋतुस्नातेति॥
षोडशदिनरूपमवधिमभिव्याप्येत्यर्थः। तथाचरजोदर्शनादारभ्याषोडशदिनं

बाहुल्याद्रजसःस्त्रीस्याच्छुक्राधिक्येपुमान्भवेत्॥ शुक्रशो
णितयोःसाम्येजायतेऽथनपुंसकः॥६॥ ऋतुस्नाताभवेन्नारी
चतुर्थदिवसेततः ॥ ऋतुकालस्तुनिर्दिष्टआषोडशदिनाव
धि॥ ७ ॥ तत्रायुग्मदिनेस्त्रीस्यात्पुमान्युग्मदिनेभवेत्॥८॥

ऋतुकालइतिफलितार्थः। एवंस्थितेचतुर्थदिवसेनारीऋतुस्नाताभवेत्॥७॥ ततःपं
चमदिनमारभ्यायुग्मासुपंचमसप्तमादिषुरात्रिषुभर्तृसंयोगेस्त्रीस्यात्।युग्मासुरा
त्रिषुपुमान्स्या ।अयुग्मासुरात्रिष्वपिशुक्रबाहुल्येपुमान्स्यात्किंतुस्त्र्याकृतिः।

तथायुग्मासुरात्रिषुशोणितातिरेकेस्त्रीस्यात्किंतुपुरुषाकृतिरित्यविरोधोद्रष्टव्यः । चतुर्थरात्रौगमनंवैकल्पिकम्। अप्रमाणोपन्यासस्तु दीक्षितकृतटीकायांद्रष्टव्यइतिदिक् ॥ ८ ॥ षोडशइति ॥ अत्रसर्वत्रदिवसशब्दोराज्युपलक्षकः । चक्रवर्ती सार्वभौमः । ब्राह्मणश्चेज्ज्ञानपारगःस्यात् ॥ ९ ॥ ऋतुस्नातेति ॥ तत्तस्मा

षोडशेदिवसेगर्भोजायतेयदिसुभ्रुवः ॥ चक्रवर्तीतदाराजा
जायतेसनसंशयः॥९॥ऋतुस्नातायस्यपुंसःसाकांक्षंमुखमी
क्षते ॥ तदाकृतिर्भवेद्गर्भस्तत्पश्येत्स्वामिनोमुखम् ॥ १० ॥

त्कारणात्स्वामिनोभर्तुः । अत्रलिंगपुराणसंग्रहः । “ चतुर्थ्यांरात्रौ । विद्याहीनंव्रतभ्रष्टंपतितंपारदारिकम् । दारिद्र्यार्णवमग्नंचतनयंसाप्रसूयते । पंचम्यासुत्तमां कन्यां षष्ठ्यांसत्पुत्रं सप्तम्यांकन्यां अष्टम्यांसंपन्नंपुत्रं ” इत्यादिफलानिवर्णितानि । “ त्रयोदश्यांव्यभिचारिणींकन्यां चतुर्दश्यांसत्पुत्रं पंचदश्यांधर्मज्ञांकन्यां

षोडश्यांज्ञानपारगंपुत्रंप्रसूयते " इत्यादिफलंज्ञेयमितिदिक् ॥१०॥ यास्त्रीति॥ स्त्रियाश्चर्मरूपाआवृतिः पेशीतियावत् ॥ साजरायुरितिगद्यते । जरायुःसेति स्त्रीलिंगमार्षम् ॥ यस्मात्कारणात् । तेनकारणेनजरायुजःप्रोक्तःकविभिरितिशे

यास्त्रीचर्मावृतिःसूक्ष्माजरायुःसानिगद्यते ॥ शुक्रशोणितयोर्योग
स्तस्मिन्नेवभवेद्यतः ॥ तत्रगर्भोभवेद्यस्मात्तेनप्रोक्तोजरायुजः ११
अंडजाःपक्षिसर्पाद्याःस्वेदजामशकादयः ॥ उद्भिज्जावृक्षगुल्मा
द्यामानसाश्चसुरर्षयः ॥ १२ ॥ जन्मकर्मवशादेवनिषिक्तंस्मरमं
दिरे ॥ शुक्रंरजःसमायुक्तंप्रथममेमासितद्द्रवम् ॥ १३ ॥

षः ॥ ११ ॥ अंडजाइति ॥ मनसोजातामानसाः । योगसामर्थ्यमेवतत्रका रणमितिभावः ॥ १२ ॥ अथपिंडोत्पत्तिक्रममाह ॥ जन्मकर्मेति ॥ भावि जन्मनःकारणंयत्कर्मतद्वशादेवेतिसंबंधः । स्त्रीयोनौनिषिक्तं तद्रजसासहितंद्रव

रूपंसत्प्रथमेमासितिष्ठति ॥ १३ ॥ बुद्बुदमिति ॥ इदंद्रवरूपंशुक्रंबुद्बुदरूपं भवति । तस्मात्कललंद्रप्सरूपंभवति । ततः पेशीभवति ततः पेशीघनंभवतीति प्रथममासएवक्रमाद्भाविन्यश्चतस्रोऽवस्थानिर्दिष्टाः । द्वितीयमासेतुपिंडोजायते

बुद्बुदंकललंतस्मात्ततःपेशीभवेदिदम् ॥ पेशीघनंद्वितीयेतु
मासिपिंडःप्रजायते ॥ १४ ॥ करांघ्रिशीर्षकादीनितृतीयेसं
भवंतिहि ॥ अभिव्यक्तिश्चजीवस्यचतुर्थेमासिजायते ॥ १५ ॥
ततश्चलतिगर्भोऽपिजनन्याजठरेस्वतः ॥ पुत्रश्चेद्दक्षिणेपा
र्श्वेकन्यावामेचतिष्ठति ॥ १६ ॥ नपुंसकस्तूदरस्यभागेति
ष्ठतिमध्यमे ॥ अतोदक्षिणपार्श्वेतुशेतेमातापुमान्यदि ॥ १७ ॥

॥ १४ ॥ अभिव्यक्तिरिति ॥ जीवस्यजीवोपाधेर्लिंगदेहस्येतियावत् ॥ १५ ॥ ॥ ततइति ॥ जनन्याजठरेगर्भःस्वतोऽपिस्वतएवेत्यर्थः ॥ १६ ॥ १७ ॥

अंगप्रत्यंगेति ॥ तदाचतुर्थमासे अंगानिकरचरणादीनि प्रत्यंगानिअंगुल्यादी
नितेषांभागाअंशाः सूक्ष्मायुगपतूस्युः। जन्मनउत्पत्तेरनंतरंसंभवउत्पत्तिर्येषांता
न्‌तथोक्तान्‌श्मश्रुदंतादीन्विहाय ॥ १८॥ चतुर्थेइति ॥ तेषांभावानांवक्ष्यमाणा

अंगप्रत्यंगभागाश्चसूक्ष्माःस्युर्युगपत्तदा ॥ विहायश्मश्रुदं
तादीन्‌जन्मानंतरसंभवान्‌ ॥ १८ ॥ चतुर्थेऽव्यक्ततातेषां
भावानामपिजायते ॥ पुंसांस्थैर्यादयोभावाभूतत्वाद्यास्तु
योषिताम्‌ ॥ १९ ॥ नपुंसकेचतेमिश्राभवंतिरघुनंदन ॥
मातृजंचास्यहृदयंविषयानभिकांक्षति ॥ २० ॥

नामपिअभिव्यक्तिर्जायते। केतेभावाइत्याकांक्षायामाह ॥ पुंसामिति ॥ योषि
तांभूतत्वाद्याःभूतत्वंचांचल्यम्‌ ॥ १९ ॥ नपुंसकइति ॥ मातृजमितिगर्भस्यहृद
यंमातुर्हृदयाज्जायतइत्यर्थः। अतोमातुराकांक्षितानेवविषयानभिकांक्षति॥२०॥

ततइति ॥ ततःकारणाद्गर्भस्यविवृद्धयेमातुर्मनसोयद्यदन्नपानाद्यभीष्टंतत्कुर्यात् ॥ तांचेति ॥ द्वेहृदयेयस्यास्तांदौहृदिनीम् । पृषोदरादित्वात्साधुः ॥ २१ ॥ अदानादिति ॥ दोहदानांगर्भिण्यभिलषितार्थानामदानात् गर्भस्यव्यंगता अंग

ततोमातुर्मनोऽभीष्टंकुर्याद्गर्भविवृद्धये॥ तांचद्विहृदयांनारीमाहुर्दौहृदिनींततः ॥२१॥ अदानाद्दोहदानांस्युर्गर्भस्यव्यंगतादयः ॥ मातुर्यद्विषयेलोभस्तदार्तोजायतेसुतः ॥ २२ ॥ प्रबुद्धंपंचमेचित्तंमांसशोणितपुष्टता॥षष्ठेऽस्थिस्नायुनखरकेशलोमविविक्तता ॥ २३ ॥ बलवर्णौचोपचितौसप्तमेत्वंगपूर्णता ॥

न्यूनत्वम्। आदिपदेन अशक्तबुद्धिमांद्यत्वादीनांसंग्रहः ॥ २२ ॥ प्रबुद्धमिति ॥ पंचमेप्रबुद्धंज्ञानवद्भवति । षष्ठेतुनखराणिनखानिकेशाःशिरोरुहारोमाण्यंगरुहाणि ॥२३॥ बलवर्णाविति॥ सप्तमेबलवर्णौचउपचितौभवतः। अंगपूर्णतासप्तमे

सर्वांगसंपूर्णोभवतीतिवचनात्पादाभ्यामंतरितौयौहस्तौताभ्यांश्रोत्ररंध्रेपिधायाच्छाद्य ॥ २४ ॥ सजंतुः किंविधस्तत्राह ॥ उद्विग्नइति ॥ गर्भसंवासाद्गर्भसंवाससंकटादित्यर्थः । उद्विग्नःसंजातत्रासःतथागर्भभयेनभाविगर्भप्रतिसंधानजनितेन

पादांतरितहस्ताभ्यांश्रोत्ररंध्रेपिधायसः॥२४॥ उद्विग्नोगर्भसंवासादस्तिगर्भभयान्वितः॥२५॥ आविर्भूतप्रबोधोऽसौगर्भदुःखादिसंयुतः॥ हाकष्टमितिनिर्विण्णःस्वात्मानंशोशुचीत्यथ॥ २६ ॥ अनुभूतामहासह्यपुरोमर्मच्छिदोऽसकृत्॥

भयेनान्वितोयुक्तःसन्नस्तितिष्ठति ॥ २५ ॥ आविर्भूतइति ॥ आविर्भूतःप्रबोधोभूतभविष्यदनेकजन्मज्ञानंयस्यसतथा निर्विण्णः पश्चात्तापवान् शोशुचीति पुनःपुनःशोचतीत्यर्थः । यङ्लुङंताल्लटिरूपमिदम् ॥ २६ ॥ भूतजन्मदुःखान्यनुस्मृत्यशोचति॥ अनुभूतेति ॥ महासह्याश्चताः पुरश्चतास्तथोक्ताः। नारकीश

रीराणीत्यर्थः। "शतंमापुरआयसीररक्षन्" इतिश्रुतेः। कर्मधारयेकृते "ऋक्पूरब्धूः" इतिसमासांतेऽचि "परवल्लिंगंद्वंद्वतत्पुरुषयोः" इतिस्त्रीत्वादाप्। मयानुभूताइतिसंबंधः। करंभवालुकाःयवभर्जनार्थंतप्ताः सिकताः। तप्ताःपुन

करंभवालुकास्तप्ताश्चादह्यंतासुखाशयाः ॥ २७ ॥ जठरानलसंतप्तपित्ताख्यरसविप्रुषः॥ गर्भाशयेनिमग्नंतुदहंत्यतिभृशंहिमाम् ॥ २८॥ उदर्यंकृमिवक्त्राणिकूटशाल्मलिकंटकैः ॥ तुल्यानिचतुदंत्यार्तंपार्श्वास्थिक्रकचार्दितम् ॥ २९ ॥

श्चसंतापिताः। कीदृश्यः असुखंआशेते आस्विति असुखाशयाः। एवंभूतामांदहंतीतिसंबंधः ॥ २७ ॥ २८ ॥ उदर्येति ॥ उदरेभवाउदर्याः। "शरीरावयवाद्यत्"। उदर्यकृमीणांवक्त्राणिआर्तंमांतुदंतिव्यथयंतीत्यन्वयः। कीदृशानिवक्त्राणि। कूटशाल्मलेः कंटकैःतुल्यानि। कीदृशंमां मातुःपार्श्वभागयोर्यान्यस्थीनितान्येव

क्रकचाः करपत्राणितैरार्दितंपीडितम् ॥२९॥ गर्भेइति ॥ मातुर्गर्भे । कीदृशे । दु
र्गंधभूयिष्ठेपूतिगंधिबहुले । किंच । जठराग्निनाप्रदीपितेयन्मयादुःखमाप्तमनुभू
तं तस्माद्दुःखात्कुंभपाकाख्येनरकेजातंदुःखंकनीयः । अत्यल्पमित्यर्थः ॥ ३० ॥
पूयेति ॥ पूयोरक्तविकारः । असृग्रक्तं श्लेष्माकफः तत्पायित्वं वांताशित्वम् । उद

गर्भेदुर्गंधभूयिष्ठेजठराग्निप्रदीपिते ॥ दुःखंमयाप्तंयत्तस्मात्कनीयः
कुंभपाकजम् ॥ ३० ॥ पूयासृक्श्लेष्मपायित्वंवांताशित्वंचयद्भवेत् ॥
अशुचौक्रिमिभावश्चतत्प्राप्तंगर्भशायिना ॥३१॥ गर्भशय्यांसमारुह्य
दुःखंयादृङ्मयापितत् ॥ नातिशेतेमहादुःखंनिःशेषनरकेषुतत् ॥ ३२ ॥

रस्थमन्नमेववांतत्वेनोपचर्यतेतद्भक्षणशीलत्वम् । अशुचौविण्मूत्रादौक्रमिभावश्च ।
तत्त्रितयमपिगर्भशायिनामयाप्राप्तमितिसंबंधः ॥ ३१ ॥ गर्भाशय्यामिति ॥
गर्भएवशय्या तांसमारुह्याश्रित्यमयायादृग्दुःखं आपिप्राप्तं तद्दुःखंकर्म समस्ते

पुनरकेषुदुःखंकर्तृतन्नातिशेते । आकल्पंभोक्तव्यसर्वनरकदुःखादपिगर्भवास दुःखमसह्यमितिभावः ॥ ३२ ॥ एवमिति ॥ नानाविधाजातीः संकरजातीः पुल्कसत्वाद्याः यातनास्तीव्रवेदनाश्च स्मरन् मोक्षस्यउपायंचाभिध्यायन् केनोपायेनमेमोक्षोभविष्यतीतिच चिंतयन्नित्यर्थः । वर्ततेतिष्ठति । कीदृक् । अ

एवंस्मरन्पुराप्राप्तानानाजातीश्चयातनाः ॥ मोक्षोपायमभि
ध्यायन्वर्ततेऽभ्यासतत्परः॥३३॥ अष्टमेत्वक्स्मृतीस्यातामोज
स्तेजश्चहृद्भवम् ॥ शुभ्रमापीतरक्तंचनिमित्तंजीवितेमतम् ३४

भ्यासः समस्तदुःखचिंतनपूर्वकंमोक्षोपायचिंतनवृत्तिः तत्रतत्परस्तदेकनिष्ठइत्यर्थः ॥ ३३ ॥ अष्टमइति ॥ त्वक्चर्मस्मृतिर्गमनरूपंकर्म तेउभेस्याताम् । हृदिभवंहृद्भवं ओजस्तेजश्चस्यात् । तयोः स्वरूपमाह । शुद्धंयदोजःशब्दवाच्यं तच्छुभ्रं यत्तेजःशब्दवाच्यंतत् आईषत्पीतंरक्तंच । तदोजस्तेजश्चधातुपरिणा

मविशेषात्मकंजीवितेनिमित्तं तदष्टमेमासिमतंतत्रस्फुटीभवतीत्यर्थः ॥३४॥ मात रमिति ॥ यत्पूर्वोक्तमोजः गर्भस्याद्दष्टवशात् चंचल्यतेगर्हितं चलतीतिचंचलम् । अतएवपुनर्मातरंचपुनश्चगर्भंप्रधावति। अनियतावस्थितिर्भवतीत्यर्थः।ततोहेतोः अष्टमेमासिजातोनजीवति । प्रागुक्तेनओजसाउज्झितस्त्यक्तः ॥३५॥ किंचि

मातरंचपुनर्गर्भंचंचलंतत्प्रधावति ॥ ततोजातोऽष्टमेमासि
नजीवत्योजसोज्झितः ॥ ३५ ॥ किंचित्कालमवस्थानंसं
स्कारात्पीडितांगवत् ॥ समयःप्रसवस्यस्यान्मासेषुनवमा
दिषु ॥ ३६ ॥ मातुरस्रवहांनाडीमाश्रित्यान्ववतारिता ॥

त्कालमिति ॥ नवमादिषुमासेषुप्रसवस्यसमयः स्यात् । तेषुमासेषुसंस्कारात्प्र सवप्रतिबंधकाद्दष्टात्किंचित्कालमवस्थानंभवतीति। तत्रदृष्टांतः।भारादिनाश्रांत स्तूष्णींतिष्ठतितद्वत् ॥ ३६ ॥ मातुरिति ॥ अस्रंशोणितंवहत्यनयेत्यस्रवहातां

नाडीमाश्रित्यनाभिस्थानाडी अन्ववतारिता विस्तारितास्ति। साचनाडीगर्भस्थ मातुराहारोमात्राहारस्तत्संबंधिनंरसंआवहति। अस्त्रवहनाड्याश्रितनाभिस्थ नाडीप्रापितमात्राहाररसेनगर्भोजीवतीतिभावः। तदेवस्पष्टमाचष्टे नेति॥ योषितस्तेनान्नरसेनमात्राहारेणस्वल्पाहारभूतेनापितद्गर्भोजीवतीत्यर्थः ॥३७॥

नाभिस्थनाडीगर्भस्यमात्राहाररसावहा ॥ तेनजीवतिगर्भोऽपि
मात्राहारेणपोषितः ॥ ३७ ॥ अस्थियंत्रविनिष्पिष्टःपतितःकु
क्षिवर्त्मना ॥ मेदोऽसृग्दिग्धसर्वांगोजरायुपुटसंवृतः ॥ ३८ ॥

प्रसूतिप्रकारमाह॥ अस्थियंत्रेति॥ योनिचक्रेयान्यस्थीनितदेवयंत्रंतेनविनि ष्पिष्टोव्यथितांगः सन्कुक्षिवर्त्मनाकुक्षिर्बस्तिस्ततोयोनिरेवंभूतेनेत्यर्थः। बहिः पतितोनिःसृतोभवतीतिशेषः। किंभूतः। मेदश्चअसृक्चताभ्यांदिग्धमालिप्तं

सर्वमंगंयस्यसतथा। जरायुरेवपुटमपिधानंतेनसंवृतः ॥ ३८ ॥ निष्क्रामन्निति ॥ एवमुक्तप्रकारेणयंत्राद्विनिर्मुक्तः सन्पतति। एवंगर्भवासदुःखंनिरूपितम्। उत्तानशायीत्यादिनाशैशवदुःखंनिरूपयति। उतअपिच उत्तानशायीडिंभइत्य

निष्क्रामन्भृशदुःखार्तोरुदन्नुच्चैरधोमुखः॥ यंत्रादेवंविनिर्मुक्तः पतत्यु
त्तानशाय्युत॥ ३९॥ अकिंचित्कस्तदालोकैर्मांसपेशीवदास्थितः॥
श्वमार्जारादिदंष्ट्रिभ्योरक्ष्यतेदंडपाणिभिः॥४०॥ पितृवद्राक्षसंवेत्ति
मातृवड्डाकिनीमपि ॥ पूयंपयोवदज्ञानाद्दीर्घकष्टंतुशैशवम् ॥ ४१ ॥

र्थः॥ ३९॥ अकिंचित्कःकिंचिदपिकर्तुंसमर्थः। सर्वथापराधीनइतिभावः। अतएवलोकैर्मांसपेशीवद्व्यवस्थितः। दंडपाणिभिः स्वजनैः ॥ ४० ॥ विवेकशून्यत्वंप्रतिपादयति। पितृवदिति ॥ डाकिनींराक्षसीविशेषम्। दीर्घकष्टंयस्मि

न्तत्तादृशंशैशवमिति ॥ ४१ ॥ श्लेष्मणेति ॥ सुषुम्नाब्रह्मनाडीत्युच्यते साया वच्छ्लेष्मणापिहितास्तितावत्स्पष्टाक्षरंवचनंवक्तुंनशक्यते ॥४२॥४३॥ यौवनंनि

श्लेष्मणापिहितानाडीसुषुम्नायावदेवहि ॥ व्यक्तवर्णंचवचनंताव द्वक्तुंनशक्यते ॥ ४२ ॥ अतएवचगर्भेऽपिरोदितुंनैवशक्यते ॥४३॥ दृप्तोऽथयौवनंप्राप्यमन्मथज्वरविह्वलः ॥ गायत्यकस्मादुच्चैस्तुत थाकस्माच्चवल्गति ॥ ४४ ॥ आरोहतितरून्वेगाच्छांतानुद्वेजय त्यपि ॥ कामक्रोधमदांधःसन्नकांश्चिदपिवीक्षते॥४५॥ अस्थिमां सशिरालायावामायामन्मथालये ॥ उत्तानपूतिमंडूकपाटितोदर सन्निभे ॥ आसक्तःस्मरबाणार्तआत्मनादह्यतेभृशम् ॥ ४६ ॥

रूपयति ॥ दृप्तोथेति ॥ दृप्तोगर्वितःअकस्मात्निर्निमित्तंवल्गतिस्वपराक्रमंवि कत्थते ॥ ४४ ॥ ४५ ॥ अस्थिचमांसंचशिराचअस्थिमांसशिरंतत् आसमंता

ह्लातिगृण्हातिसातथातस्या वामायाःस्त्रिया मन्मथालयेउपस्थे। उत्तानंपूतिदुर्गं
धंईदृशंयन्मंडूकस्यपाटितंविशीर्णंउदरंतत्सदृशे । आसक्तःसन्नात्मनामनसा ॥
॥ ४६ ॥ अस्थीति ॥ वामानांसुंदरीणांवपुःशरीरंअस्थिमांसप्रभृतिभ्योऽन्य
द्वर्ततेकिं नास्त्येवेत्यर्थः। यद्यपिअस्थ्यादीनामेकत्वमेवापेक्षितं प्राण्यंगत्वात्तथा

अस्थिमांसशिरात्वग्भ्यःकिमन्यद्वर्ततेवपुः ॥ वामानांमा
ययामूढोनकिंचिद्वीक्षतेजगत् ॥४७॥ निर्गतेप्राणपवनेदेहो
हंतमृगीदृशः॥ यथाहिजायतेनैववीक्ष्यतेपंचषैर्दिनैः॥४८॥

प्यार्षत्वमेवगतिः। यद्यप्येवंतथापिमाययायोषिन्मय्यामूढोयुवाकिमपिजगन्नेक्ष
ते यथावन्नज्ञानाति। किंतुस्त्रीमयमेवपश्यतीत्यर्थः॥४७॥ निर्गतइति ॥ प्राणपव
नेनिर्गतेसतिपंचभिः षड्भिर्वेतिपंचषैर्दिनैः। मृगीदृशोदेहोयथाहिजायतेयामवस्थां
प्राप्नोतितन्नवीक्ष्यतेनपर्यालोच्यते मूढेनयूनेतिशेषः। उक्तंच। "नारीस्तनभरना

भिनिदेशंदृष्ट्वामायामोहावेशम्। एतत्सर्वंमांसविकारंमनसिविचारयवारंवारम्" इति ॥ ४८ ॥ वार्धकदुर्दशामाह ॥ माहापरिभवेति ॥ महांश्चासौपरिभवस्तिरस्कारस्तस्यस्थानम्। अजहल्लिंगत्वात्तथैवविशेषणम्। "शैत्यंहियत्साप्रकृतिर्जलस्य" इतिवत्। एवंविधांजरांप्राप्यातिदुःखितस्तिष्ठतीतिशेषः। जग्धंभक्षि

महापरिभवस्थानंजरांप्राप्यातिदुःखितः॥ श्लेष्मणापिहितोरस्को
जग्धमन्नंनजीर्यति ॥४९॥ सन्नदंतोमंददृष्टिः कटुतिक्तकषायभुक्॥
वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः॥५०॥गदायुतसमाविष्टः परि
भूतःस्वबंधुभिः॥ निःशौचोमलदिग्धांगआलिंगितवरोषितः ५१

तमन्नंनजीर्यतिजीर्णंनभवतीत्यर्थः ॥ ४९ ॥ सन्नाविशीर्णादंतायस्यसतथा कटुतिक्तादीन्रसान्व्याधिनिवृत्तयेभुंक्तइतितथाभूतः। वातेनभुग्नानम्राः कट्याद्यवयवायस्यसतथा। अतएवाबलः बलहीनः ॥ ५० ॥ गदेति ॥ गदानांरोगा

णामयुतेनदशसहस्त्रेण समाविष्टोव्याप्तः। निःशौचः शौचशून्यः। मलेनादिग्धं लिप्तमंगंयस्यसतथा। आलिंगितंवरंमहत् उषितंदाहोयेनसतथा। उषदाहे अस्माद्धातोर्भाविक्तः। एवमादिरोगग्रस्तस्वाद्बंधुभिः स्त्रीपुत्रादिभिः परिभूतोऽनादृत इत्यर्थः॥ ५१ ॥ ध्यायन्निति ॥ असुलभानूस्वाद्वन्नमृदुशय्यादीनूभोगानूकेवं

ध्यायन्नसुलभान्भोगानूकेवलंवर्ततेचलः॥ सर्वेंद्रियक्रियालोपाद्धास्यतेबालकैरपि ॥५२॥ ततोमृतिजदुःखस्यदृष्टांतोनोपलभ्यते॥ यस्माद्बिभ्यतिभूतानिप्राप्तान्यपिपरांरुजम्॥५३॥

लंध्यायन्तिष्ठति। नतुभगवंतंध्यायतीतिभावः। चलतीति चलः कंपमानदेहइत्यर्थः। सर्वेषामिंद्रियाणांयथायथंव्यापारलोपात्। बालकैरपिहास्यते उपहास्यतइत्यर्थः॥ ५२ ॥ ततइति ॥ ततोवार्धकानंतरंमरणंतेनजातस्यदुःखस्यदृष्टांतोनैवोपलभ्यते। यस्मान्मरणाद्भूतानिबिभ्यति। कीदृशानि। परांमहतींरुजंपी

डांशेगरूपांदारिद्र्यादिरूपांवाप्राप्तान्यपि ॥ ५३ ॥ नीयतइति ॥ बंधुभिः स्त्रीपुत्रादिः परिष्वक्तोऽपि आलिंगितोऽपि । अत्रदृष्टांतः ॥ सागरेति ॥ पन्नांनगच्छतीतिपन्नगः सर्पः ॥ ५४ ॥ हाकांतेइति ॥ यमदूतान्दृष्ट्वा सुतरांदारुणंयथा भवतितथा हाकांतेइत्यादिक्रंदमानअक्रोशन्नपिनरः मृत्युनासर्पेणमंडूकइवनीयते ॥ ५५ ॥ मर्मस्विति ॥ उन्मथ्यमानेषुप्राणवायुनावियुज्यमानेषु । उत्कृष्यमानेष्वितिपाठेऽयमेवार्थः। तथाहस्तपादादीनांचसंधिषुमुच्यमानेषुसत्सुम्रियमाणस्ययद्दुःखंतन्मुमुक्षुभिःस्मर्यताम् । तस्माद्देहेविश्वासोनाविधेयइतिभावः॥५६॥

> नीयतेमृत्युनाजंतुःपरिष्वक्तोऽपिबंधुभिः ॥ सागरातर्जलगतोगरुडेनेवपन्नगः ॥५४॥ हाकांतेहाधनंपुत्राःक्रंदमानंसुदारुणम् ॥ मंडूकइवसर्पेणमृत्युनानीयतेनरः ॥ ५५ ॥ मर्मसून्मथ्यमानेषुमुच्यमानेषुसंधिषु ॥ यद्दुःखंम्रियमाणस्यस्मर्यतांतन्मुमुक्षुभिः ॥ ५६ ॥

दृष्टाविति ॥ दृष्टावाक्षिप्यमाणायांयमदूतैरितिशेषः । ह्रियमाणयासंज्ञयाउप लक्षितस्यतात्कालिक्यायातनयानिःसंज्ञस्येत्यर्थः । मृत्युपाशेनबद्धस्य । एवंविध स्यजंतोस्त्रातारक्षकोनोपलभ्यतएव । तस्मात्तस्मिन्कालेयस्त्राताईश्वरः सचादा वेवशरणीकरणीयइतिभावः ॥ ५७ ॥ संरुध्यमानइति ॥ तमसाअज्ञानेनसंरु

दृष्टावाक्षिप्यमाणायांसंज्ञयाह्रियमाणया ॥मृत्युपाशेनबद्ध
स्यत्रातानैवोपलभ्यते ॥ ५७ ॥ संरुध्यमानस्तमसामहच्चि
त्तमिवाविशन् ॥ उपाहूतस्तदाज्ञातीनीक्षतेदीनचक्षुषा ५८

ध्यमानः । तथापिमहच्चित्तंविवेकम् । चितीसंज्ञाने भावेक्तः । आविशन्निवसाव धानतांप्राप्तःसन्निव । ज्ञातिभिरुपाहूतः सन् तदातस्यामवस्थायामपिज्ञाती नूदीनचक्षुषाईक्षते । संभाषणासमर्थत्वादीक्षणमात्रंकरोतितदेतन्महतोविवेकस्य कार्यम् । तदभावेईक्षणमपिदुःसाध्यमितिभावः । तस्मात्तस्मिंन्कालेईश्वरध्याना

र्थंयावज्जीवंध्यानाभ्यासोविधेयइतिव्यंजनम् ॥ ५८ ॥ अयःपाशेनेति ॥ कालेनकर्त्राअयःपाशेनकरणेनतमुक्तावस्थापन्नमात्मानंपरितः सर्वतःकृष्यमाणमीक्षते । इदंमहतोविवेकस्यफलं किम्नुवक्तव्यंतदाभगवच्चिंतनम् ॥५९॥ हिक्कयेति ॥

अयःपाशेनकालेनस्नेहपाशेनबंधुभिः ॥ आत्मानंकृष्यमाणंतमीक्षतेपरितस्तथा ॥५९॥ हिक्कयाबाध्यमानस्यश्वासेनपरिशुष्यतः ॥ मृत्युनाकृष्यमाणस्यनखल्वस्तिपरायणम् ॥ ६० ॥ संसारयंत्रमारूढोयमदूतैरधिष्ठितः ॥ कयास्यामीतिदुःखार्तःकालपाशेनयोजितः ॥ ६१ ॥ किंकरोमिक्कगच्छामिकिंगृण्हामित्यजामिकिम् ॥

प्राणवायुगतिमांद्यंहिक्का तस्यागतिप्राचुर्यंश्वासस्तेनच परायणंरक्षकः ॥ ६० ॥ संसारएवयंत्रंभ्रमच्चक्रंतदारूढोयमदूतैरधिष्ठितआक्रांतः सन् । अतःपरंकयास्यामीतिदुःखार्तः । कालपाशेनयोजितःबद्धः ॥६१॥ किंकरोमीति ॥ किंकरोमी

त्यादिकंकिंचित्कालंचिंतयित्वा ततइतिकर्तव्यतायांमूढःसन् कष्टाद्देहादसून्प्रा णान्त्यजति ॥ ६२ ॥ ततःकिमित्यतआह ॥ यातनेति ॥ इतोऽस्माँल्लोकाद्गत्वा यमलोकमित्यध्याहारः । यातनायैदेहोयातनादेहस्तेनसंबद्धःसन्ताः प्रसिद्धाः

इतिकर्तव्यतामूढःकृच्छ्राद्देहात्त्यजत्यसून् ॥ ६२॥ यातनादेहसंबद्धो
यमदूतैरधिष्ठितः ॥ इतोगत्वानुभवतियायास्तायमयातनाः ॥
तासुयल्लभतेदुःखंतद्वक्तुंसहतेकुतः ॥ ६३ ॥ कर्पूरचंदनाद्यैस्तुलिप्य
तेसततंहियत् ॥ भूषणैर्भूष्यतेचित्रैःसुवस्त्रैःपरिवार्यते ॥ ६४ ॥

यमयातनाः । यायाअनुभवतितासांमध्येएकस्यांयातनायांयद्दुःखंलभतेऽनुभव तितत्किमपिवक्तुंकुतःसहते। एकयातनादुःखंवक्तुमशक्यंकिमुवक्तव्यंसर्वयातना दुःखमितिभावः ॥ ६३ ॥ पूर्वशरीरस्यपरिणाममाह ॥ कर्पूरेति ॥ परिवार्यतेवे

ष्यते ॥ ६४ ॥ तदेववपुर्जीवेनलिंगशरीरेणत्यक्तंसत्स्पर्शायोग्यं अप्रेक्ष्यंदर्शनायोग्यंचजायते । ज्ञातयोनिलयाद्गृहान्निष्कासयंति क्षणमपितुनस्थापयंतिगृहे ॥ ६५ ॥ दह्यतइति ॥ संस्काराभावेसृगालेनजंबुकेन गृध्रेणकुक्कुरेणवायसेनवा

अस्पृश्यंजायतेऽप्रेक्ष्यंजीवत्यक्तंसदावपुः ॥ निष्कासयंतिनिलयात्क्षणंनस्थापयंत्यपि ॥६५॥ दह्यतेचततःकाष्ठैस्तद्भस्मक्रियतेक्षणात् ॥ भक्ष्यतेवासृगालेनगृध्रकुक्कुरवायसैः ॥ पुनर्नदृश्यतेसोऽथजन्मकोटिशतैरपि ॥ ६६ ॥ मातापितागुरुजनःस्वजनोममेतिमायोपमेजगतिकस्यभवेत्प्रतिज्ञा ॥ एकोयतोव्रजतिकर्मपुरःसरोऽयंविश्रामवृक्षसदृशःखलुजीवलोकः ॥ ६७ ॥

भक्ष्यते । कुक्कुरः सारमेयः । अथसदेहःपुनर्नदृश्यते ॥ ६६ ॥ मातेति ॥ मायोपमे ऐंद्रजालिकरचितहस्त्यादिसदृशेजगति ममतात्यादिप्रतिज्ञाकस्यभवेन्न

कस्यापीत्यर्थः । अयंजीवःस्वकर्मपुरःसरःसन्नेकएवयतोव्रजति नतुमातापित्रा दिभिःसह । तथाचानादौसंसारेसर्वेषांपरस्परंमातृपितृभावोऽविशिष्टइतिभावः। जीवलोकोमनुष्यलोकःविश्रामवृक्षेणसदृशः । विश्रामइत्यार्षः ॥ ६७॥ वृक्षसा म्यंविवृणोति ॥ सायंसायमिति ॥ तेनतेनपथेतिशेषः । तद्वत्स्वस्वकर्मानुरोधेन

सायंसायंवासवृक्षंसमेताःप्रातःप्रातस्तेनतेनप्रयांति ॥ त्यक्त्वा
न्योन्यंतंचवृक्षंविहंगायद्वत्तद्वज्ज्ञातयोऽज्ञातयश्च ॥ ६८॥ मृति
बीजंभवेज्जन्मजन्मबीजंभवेन्मृतिः ॥ घटयंत्रवदश्रांतोबंभ्र
मीत्यनिशंनरः ॥ ६९ ॥ गर्भेपुंसःशुक्रपाताद्यदुक्तंमरणावधि ॥

कंचित्कालमेकत्रस्थित्वायथायथंप्रयांतीतिभावः ॥ ६८ ॥ मृतिबीजमिति॥ बंभ्रमीतिपुनःपुनर्भ्राम्यति । यङ्लुकिरूपम् ॥ ६९ ॥ शुक्रपातादारभ्यमरणाव धियदुक्तंसचासावेषचेतिकर्मधारयः । तस्यैतस्येत्यर्थः । महाव्याधेर्भेषजंमत्तो

ऽन्यःपदार्थोनास्ति । भेषजशब्दोनित्यंनपुंसकः ॥ ७० ॥ इतिश्रीशिवगीताटीकायांबालानंदिन्यामष्टमोऽध्ययः ॥ ८ ॥ ॥ अष्टमाध्यायोपक्रमे पांचभौतिकदेहस्यचोत्पत्तिर्विलयःस्थितिः । स्वरूपंचकथमितिरामेणपृष्टं तत्रोत्पत्तिस्थितिविलयानिरूपिताः । स्वरूपंतुइहप्राधान्येननिरूप्यतइतिप्रतिजानीते ॥ देह

तदेतस्यमहाव्याधेर्मत्तोनान्योऽस्तिभेषजम् ॥ ७० ॥ इतिश्रीपद्मपुराणेउत्तरखंडेशिवगी० अष्टमोऽध्यायः ॥८॥ श्रीभगवानुवाच ॥ देहस्वरूपंवक्ष्यामिशृणुष्वावहितोनृप ॥ मत्तोहिजायतेविश्वंमयैवैतत्प्रधार्यते ॥ मय्येवेदमधिष्ठानेलीयतेशुक्तिरौप्यवत् ॥ १ ॥

स्वरूपमिति ॥ अवहितःसमाहितमनाः । शृणुष्वशृण्वित्यर्थः । तत्रादौशरीरस्यविश्वांतःपातित्वाद्विश्वोत्पत्तिलयामय्यधिष्ठानएवेतिप्रतिपादयति ॥ मत्तइति ॥ मद्विषयकंयदज्ञानंतत्कार्यंविश्वंमद्विषयकज्ञानेनविलीयते । शुक्त्यवच्छिन्नचैतन्यविष

यकज्ञानकार्यंरजतंयथाशुक्तिसाक्षात्काराद्विलीयतेतद्वत् ॥ १ ॥ नचैतावताममविकारित्वमित्याह ॥ अहंत्विति ॥ अहंतुनिर्मलोऽविद्यारहितः पूर्णस्त्रिविधपरिच्छेदविधुरः सच्चिदानंदस्वरूपः । असंगः । " असंगोह्ययंपुरुषः " इतिश्रुतेः । निरहंकारः कर्तृत्वाद्यहंकाररहितः शुद्धंब्रह्मसनातनम् ॥ २ ॥ एवंविधोऽप्यहंअनाद्यविद्ययायुक्तःसन् जगत्कारणतांव्रजेव्रजामिप्राप्नोमीतियावत् । कारणत्वंना

अहंतुनिर्मलःपूर्णःसच्चिदानंदविग्रहः ॥ असंगोनिरहंकारःशुद्धंब्रह्म
सनातनम् ॥ २ ॥ अनाद्यविद्यायुक्तःसन्जगत्कारणतांव्रजे ॥ ३ ॥

मकर्तृत्वम् । " जन्माद्यस्ययतः " इतिसूत्रेतथाप्रतिपादनात् । नचकर्ताकुलालादिः कार्येषुघटादिष्वन्वेति तथाब्रह्मणोऽपिकार्यान्वयोनस्यात् । तथात्वे तत्तुसमन्वयादित्याधिकरणविरोधः प्रसज्येतेतिवाच्यम् । " सोऽकामयत " इतिनिमित्तत्वंबहुस्यामित्युपादानत्वंचब्रह्मणः प्रतिपादितमाकरे । तथाचाभिन्ननिमित्तोपा

दानंब्रह्मेतिसिद्धांतः। अविद्ययाब्रह्मणश्चसंबंधोऽप्याविद्यकोऽनिर्वचनीयएव । तथाचप्रपंचोब्रह्मापेक्षयाविवर्तः मायापेक्षयापरिणामइतिसिद्धांतः॥ ३ ॥ अनिर्वाच्येति॥ उपादानसमसत्ताकान्यथाभावत्वंपरिणामत्वं वियदादीनामविद्यापरिणामित्वात्। सपरिणामोऽस्याअस्तीतिपरिणामिनी। अनिर्वाच्या सतीतिनिर्वक्तुमशक्या ज्ञानबाध्यत्वात्। असतीत्यपिनिर्वक्तुमशक्या जगद्रूपेणप्रतीयमा

अनिर्वाच्यामहाविद्यात्रिगुणापरिणामिनी॥
रजःसत्वंतमश्चेतितद्गुणाःपरिकीर्तिताः ॥४॥

नत्वात्। अतएवसदसद्विलक्षणा। तदुक्तंभागवते । "ऋतेर्थंयत्प्रतीयेतनप्रतीयेतचात्मनि। तद्विद्यादात्मनोमायांयथाभासोयथातमः" इति । पुनः कीदृशी त्रिगुणा। तानेवगुणानाह ॥ रजइति ॥ महाविद्येत्यनेनमूलाज्ञानमेवजगदुपादानंनतुमूलज्ञानं शुक्तिज्ञानेनरजताभासनिवृत्तौएकजीवाज्ञाननिवृत्तौवासकल

प्रपंचनिवृत्त्यापत्तेः ॥ ४ ॥ गुणानांप्रत्येकंकार्यंदर्शयति ॥ सत्वमिति ॥ नृणासु खाकारज्ञानाकारवृत्त्योः कारणंसत्वम् । रजःचंचलंरक्तवर्णंदुःखास्पदंदुःखकार णम् ॥५॥ तमःकृष्णवर्णंजडं उदासीनंसुखादिषु । सुखादिजननासमर्थमित्यर्थः । तेचगुणाः पररूपराभिभवात्मकाः । "रजस्तमश्चाभिभूयसत्वंभवतिभारत ॥ रजः

सत्वंशुक्लंसमादिष्टंसुखज्ञानास्पदंनृणाम् ॥ दुःखास्पदंरक्तव
र्णंचंचलंचरजोमतम् ॥ ५ ॥ तमःकृष्णंजडंप्रोक्तमुदासीनंसुखा
दिषु ॥ ६ ॥ अतोममसमायोगाच्छक्तिःसात्रिगुणात्मिका ॥

सत्वंतमश्चैवतमःसत्वंरजस्तथा " इतिश्रुतेः ॥ ६ ॥ अतइति ॥ यतःकारणा त्स्वतोसंगोदासीनस्यसदास्वानंदपूर्णस्यासत्यानेकविधदुःखात्मकप्रपंचरचना नुपपत्त्या " मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः " इतिश्रुत्या नवास्तवीशक्तिः कल्प्यते । अतःकारणान्ममसमायोगात् आविद्यकसंबंधान्मदीयशक्तिर्मा

याअनिर्वचनीयत्वेनप्रसिद्धा । त्रिगुणात्मिकामय्येवाधिष्ठानेविश्वरूपतानानाविधस्वरूपत्वंभजते । यथोक्तानुपपत्तिसिद्धार्थानुवादिनीश्रुतिरपि " अजामेकामित्यादि " ननुजगच्चेन्मायापरिणामस्तदाधारंचेद्ब्रह्म तर्ह्याधेयजगद्रूपेणधर्मेणतस्याधिकारित्वंस्यात् । " उपयन्नुपयन्धर्मोविकरोतिहिधर्मिणम् " इतिन्यायादित्याशंक्य जगतः कल्पितत्वेननस्वाश्रयविकारहेतुत्वमिति दृष्टांतेनप्रतिपादय

अधिष्ठानेचमय्येवभजतेविश्वरूपताम् ॥ शुक्तौरजतवद्रज्जौभुजंगोयद्वदेवतु ॥ ७ ॥ आकाशादीनिजायंतेमत्तोभूतानिमायया ॥

ति ॥ शुक्ताविति ॥ ७ ॥ विश्वरूपतांभजतइत्युक्तंतदेवविवृणोति ॥ आकाशादीनीति ॥ यद्यपिमहत्तत्वादीनिवक्तव्यानितथापि "तस्माद्वाएतस्मादात्मनआकाशःसंभूतः " इतिश्रुतिमनुसृत्योक्तम् । तदुक्तम् । " क्रमेणयुगपच्चैषासृष्टिर्ज्ञेयायथाश्रुति ॥ विविधश्रुतिसद्भावाद्विविधस्वप्नदर्शनात् " इति । तैराकाशा

दिभिरिदंसर्वंब्रह्मांडमारब्धमयंपांचभौतिकोदेहोऽप्यारब्धइत्यर्थः । अत्रेदंता त्पर्यम् । मायातत्कार्यस्याधिष्ठानंब्रह्मैव परिणामिनीमाया उपादानंतूभयमपि । तत्रस्वबुद्धिबाध्यकार्याधारत्वमधिष्ठानत्वम् । रजतस्यशुक्तिवत् । स्वबाधकंबाध्य कार्याधारत्वंपरिणामित्वं तादात्म्यवत्कारणमुपादानमिति । तादात्म्यंतुभिन्नत्वे

तैरारब्धमिदंसर्वंदेहोऽयंपांचभौतिकः ॥ ८ ॥ पितृभ्याम
शिताद्न्नात्षट्कोशंजायतेवपुः ॥ स्नायवोऽस्थीनिमज्जाच
जायंतेपितृतस्तथा ॥ ९ ॥ त्वङ्मांसशोणितमितिमातृतश्च
भवंतिहि॥भावाःस्युःषड्विधास्तस्यमातृजाःपितृजास्तथा॥

सत्यभिन्नत्वताकत्वमितिविवेकः । ब्रह्मतुविवर्तोपादानं मायातुपरिणामोपादानं वेदितव्यमितिदिक् ॥ ८ ॥ पितृभ्यामिति ॥ अशिताद्भुक्तादन्नात् षट् कोशाइ वकोशायस्मिन् तथाभूतंवपुः ॥ ९ ॥ त्वङ्मांसेति ॥ भावयंतिशरीरमितिभावा

स्तस्यशरीरस्य । तथाचगर्भोपनिषदिश्रूयते । " एतस्मिन्षट्कोशिकेशरीरे त्रीणिपितृतस्त्रीणिमातृतः अस्थिस्नायुमज्जानःपितृतस्त्वङ्मांसरुधिराणिमातृतः " इति ॥ १० ॥ मृदवइति ॥ तत्रमृदवोभावाः मताइत्यन्वयः । केतेशोणितंमेदो वपा । " हृन्मेदस्तुवपावसा " इत्यमरः । मज्जासारभूतोधातुः प्लीहागुल्मः यकृ

रसजाआत्मजाःसप्तसंभूताःस्वात्मजास्तथा ॥ १० ॥ मृदवः शोणितंमेदोमज्जाप्लीहायकृद्गुदम् ॥ हृन्नाभीत्येवमाद्याःस्यु र्भावामातृभवामताः ॥ ११ ॥ श्मश्रुरोमकचस्नायुशिराधमनयो नखाः ॥ दशनाःशुक्रमित्यादिस्थिराःपितृसमुद्भवाः ॥ १२ ॥

त्कालखंडं गुदमपानम् हृत् हृदयम् । मज्जाप्लीहानौनांतपुल्लिंगौ । नाभीस्त्रीलिंगः । " कृदिकारादक्तिनः " इतिङीप् ॥ ११ ॥ श्मश्रु पुरुषस्यमुखेरोमवृद्धिः । रोम शिरसोऽन्यत्रशरीरे । कचाः शिरोरुहाः । स्नायुः वसापरपर्यायोधातुविशेषः

शिराधमनयइति । यद्यपिशिराधमन्योः पर्यायत्वंतथापिसूक्ष्मनाडीशिरास्थूला तुधमनीतिभेदोज्ञेयः । नखाःप्रसिद्धाः । दशनादंताः शुक्रं रेतः । इत्यादयः स्थि राबहुकालावस्थायिनः पितृसमुद्भवाज्ञेयाः भावाइतिशेषः ॥ १२ ॥ शरीरेति ॥ उत्पत्तिकालेयत्स्थौल्यंसाशरीरस्योपचितिः । वर्णो गौरश्यामत्वादिःवृद्धिःक्रमे

शरीरोपचितिर्वर्णोवृद्धिस्तृप्तिर्बलंस्थितिः॥अलोलुपत्वमुत्सा
हइत्यादीन्रसजान्विदुः ॥१३॥ इच्छाद्वेषःसुखंदुःखंधर्माधर्मौ
चभावना ॥ प्रयत्नोज्ञानमायुश्चेंद्रियाणीत्येवमात्मजाः॥ १४॥

णोपचयः बलंसामर्थ्यं स्थितिःअवयवदार्ढ्यम् । अलोलुपत्वंअकार्पण्यम् । उ त्साहउद्योगः इत्यादीन्रसजान् धातुविशेषजान्विदुः । धातुविशेषविक्लवतायां मुक्तकार्यसमुदायस्यापिवैक्लव्यंद्रष्टव्यम् ॥ १३ ॥ इच्छेति ॥ इच्छाप्रभृतयो भावाआत्मजाः । प्रारब्धकर्मजन्यानतुमातृपितृजन्याइत्यर्थः । द्वेषः प्रज्वलना

त्मकःक्रोधः । सुखं अनुकूलवेदनीयम् । दुःखंप्रतिकूलवेदनीयम् । धर्मो विध्यपरपर्यायः । अधर्मोनिषेधापरपर्यायः । भावनास्मृतिहेतुःसंस्कारः । प्रयत्नःकृतिः भवितुर्भवनानुकूलो भावकव्यापारविशेषइतियावत् । ज्ञानमर्थप्रकाशः । आयुः प्राणधारणप्रयोजकीभूतःकालविशेषः । इंद्रियाणिचक्षुरादीनि । ए

ज्ञानेंद्रियाणिश्रवणंस्पर्शनंदर्शनंतथा ॥ रसनंघ्राणमित्याहुःपंचतेषां चगोचराः ॥ १५ ॥ शब्दःस्पर्शस्तथारूपंरसोगंधइतिक्रमात् ॥ वाक्क रांघ्रिगुदोपस्थान्याहुःकर्मेंद्रियाणिहि ॥ १६ ॥ वचनादानगमनविसर्ग रतयःक्रमात् ॥ कर्मेंद्रियाणांजानीयान्मनश्चैवोभयात्मकम् ॥ १७ ॥

तेभावाः स्वस्वकर्मानुसारिणइत्यर्थः ॥ १४ ॥ गोचराविषयाः ॥ १५ ॥ तानेवाह ॥ शब्दइति ॥ कर्मेंद्रियाण्याह ॥ वागिति ॥ १६ ॥ वचनादयस्तेषांकर्मेंद्रियाणांक्रियाः जानीयादितिव्यवहितेनान्वयः । मनोंऽतःकरणवृत्तिः तदुभयात्म

कंज्ञानात्मकंकर्मात्मकंचेत्यर्थः ॥ १७॥ एकमंतःकरणंवृत्तिभेदाच्चतुर्विधं मन इति बुद्धिरिति अहंकारइति चित्तमितिच व्याख्यायतइत्यर्थः ॥ १८॥ एकस्यैवांतःकरणस्यावस्थाचतुष्टयेनसंज्ञाचतुष्टयमुक्तम् । नन्वंतःकरणस्येंद्रियत्वमनुपपन्नं असाधारणविषयाभावात् । नैयायिकादिभिर्मानसत्वेनाभ्युपगतानांसुखा

क्रियास्तेषांमनोबुद्धिरहंकारस्ततःपरम् ॥ अंतःकरणमित्याहुश्चित्तंचेतिचतुष्टयम् ॥ १८॥ सुखंदुःखंचविषयौविज्ञेयौमनसःक्रियाः ॥ स्मृतिभीतिविकल्पाद्याबुद्धिःस्यान्निश्चयात्मिका ॥ अहंममेत्यहंकारश्चित्तंचेतयतेयतः ॥ १९ ॥

दीनामस्मत्सिद्धांतेसाक्षिमात्रभास्यत्वादित्याशंक्याह ॥ सुखमिति ॥ अंतःकरणोपहितस्यैवसाक्षितयासाक्षिभास्येषुसुखादिषुचैतन्योपाधित्वमात्रेणांतःकरणस्येंद्रियत्वमुच्यते । अनेनज्ञानेंद्रियत्वमुक्तम् । स्मृतिभीतिप्रभृतयोमनसःक्रि

याइत्यनेनकर्मेंद्रियत्वंसमर्थितम् । तथाचमनश्चैवोभयात्मकमित्युक्तंसुस्थम् । बुध्यादीनांलक्षणान्याह ॥ बुद्धिरिति ॥ निश्चयात्मिकाबुद्धिः । अहंममेत्यभिमानात्मकोऽहंकारः । यतःकारणादतीतानपिपदार्थांश्चेतयते स्मारयतीतितच्चित्तम् । मनसस्तुसंकल्पादिकंलक्षणम् । तदुक्तम् । "मनोबुद्धिरहंकारश्चित्तंकरणमांतरम् । संशयोनिश्चयोगर्वः स्मरणंविषयाइमे" इति विषयास्तत्तल्लक्षणानीत्यर्थः ॥१९॥

सत्वाख्यमंतःकरणंगुणभेदात्त्रिधामतम् ॥ सत्वंरजस्तमइतिगुणाः
सत्वात्तुसात्विकाः ॥२०॥ आस्तिक्यशुद्धिधर्मैकरुचिप्रभृतयोमताः ॥

सत्वाख्यमिति ॥ अंतःकरणेयत्तदेवसत्वाख्यं सत्वापरपर्यायकमित्यर्थः । तत्तु सत्वादिगुणभेदाद्विधतइत्यर्थः । केतेगुणास्तत्राह ॥ सत्वमिति ॥ २० ॥ उपादानीभूताविद्यागुणभेदादंतःकरणमपित्रिधेत्युक्तं तत्रसत्वात्सात्विकांतःकरणात्केभावाजायंतइत्याकांक्षायामाह ॥ आस्तिक्येति ॥ अस्तिपरलोकइत्येवंम

तिरास्तिक्यं शुद्धिर्मनोनैर्मल्यंधर्मेएकामुख्यारुचिः प्रभृतिग्रहणाद्विवेकादयः।
एतेभावाःसात्विकामताइत्यर्थः। रजसोरजोबहुलान्मनसः कामक्रोधमदादयो
राजसाभावाः आदिग्रहणेनलोभादीनांसंग्रहः॥ २१॥ निद्रेति॥ आलस्यमु
द्योगराहित्यं प्रमादोऽनवधानता वंचनाप्रतारणं एवमाद्यास्तामसाज्ञेयाः। सिं

रजसोराजसाभावाःकामक्रोधमदादयः॥ २१॥ निद्रालस्यप्रमा
दादिवंचनाद्यास्तुतामसाः॥ प्रसन्नेंद्रियतारोग्यानालस्याद्यास्तु
सत्वजाः॥ २२॥ देहोमात्रात्मकस्तस्मादादत्तेतद्गुणानिमान्॥
शब्दःश्रोत्रंमुखरतावैचित्र्यंसूक्ष्मताधृतिः॥ २३॥

हावलोकनेनपुनःसत्वजान्भावानाह॥ प्रसन्नेति॥ इंद्रियाणांप्रसन्नानामरजस्त
मोराहित्यमारोग्यंरोगाभावः अनालस्यमुद्योगः एवमाद्याःसत्वजाः॥ २२॥
देहइति॥ देहःस्थूलदेहोमात्रात्मकः प्रमातृतादात्म्येनाध्यस्तः एतानेवप्रमातुर्गु

णानादत्ते । अंतःकरणस्यसत्वादिगुणोद्रेकानुसारेणस्थूलदेहेऽपितथाकार्याणि भवंतीत्यर्थः॥ कस्मात्कंकंधर्ममादत्तइत्येतदेवविवेचयति ॥ शब्दइति ॥ शब्दःश्रोत्रेंद्रियं मुखरतावक्तृत्वं वैचित्र्यंकर्मकुशलता सूक्ष्मतालाघवं धृतिर्धैर्यम् ॥ २३ ॥ बलंचेतिसप्तगुणान्धर्मान्गगनात् स्थूलदेहआदत्तइतिसंबंधः । वायोस्तुयानाद

बलंचगगनाद्वायोःस्पर्शश्चस्पर्शनेंद्रियम् ॥ उत्क्षेपणमपक्षेपाकुंचनेगमनंतथा॥२४॥प्रसारणमितीमानिपंचकर्माणिरूक्षता ॥ प्राणापानौतथाव्यानसमानोदानसंज्ञाकान् ॥२५॥

त्तेतानाह ॥ स्पर्शश्चेति ॥ स्पर्शः स्पर्शनेंद्रियंत्वक् उत्क्षेपणादीनिपंचकर्माणि ॥ २४ ॥ रूक्षताकर्कशत्वम् । प्राणादिदशविकृतीः लाघवंचेतिएकोनविंशतिधर्मानादत्तइति । यद्यप्याकाशकार्यमध्येलाघवंपरिगणितामितिचेदुभयकार्यत्वा

न्नविरोधः॥ २५ ॥ २६ ॥प्राणादीनांदशानांवायुविशेषाणांस्थानानिकार्याणिचा
ह ॥ तेषामित्यादिभिः श्लोकैः ॥ तेषांपूर्वोक्तवायुकार्याणांमध्येप्राणोमुख्यत
रः सचनाभेः कंठात् नाभिंकंठंचव्याप्यावस्थितः । " ल्यब्लोपेकर्मण्यधिकर

नागंकूर्मंचकृकलंदेवदत्तंधनंजयम् ॥ दशैतावायुविकृतीस्तथा
गृण्हातिलाघवम् ॥ २६ ॥ तेषांमुख्यतरःप्राणोनाभेःकंठादव
स्थितः ॥ चरत्यसौनासिकयोर्नाभौहृदयपंकजे ॥ २७॥ श
ब्दोच्चारणनिश्वासोछ्वासादेरपिकारणम् ॥२८॥ अपानस्तुगुदे
मेंढ्रेकटिजंघोदरेष्वपि ॥नाभिकंठेवंक्षणयोरूरुजानुषुतिष्ठति ॥

णेच " इतिपंचमी । असौनासिकयोर्नासारंध्रयोर्नाभ्यादौहृदयपंकजेच चरति
॥ २७ ॥ शब्दोच्चारणादिकारणंचप्राणइत्यनुवर्तते ॥ २८ ॥ अपानस्त्विवति॥

गुदादिषुपंचसुनाभिकंठादिषुचतुर्षुचतत्रवंक्षणशब्दऊरुशब्दवाचकः । स्थानेषु अपानस्तिष्ठतीत्यन्वयः ॥ २९ ॥ व्यानस्यस्थानकर्मणीआह ॥ व्यानइति ॥ अक्ष्यादिषुपंचस्थानेषुतिष्ठति । प्राणायामः प्राणनिरोधः तत्र धृतिः कुंभकइति यावत् । त्यागोरेचकःग्रहणंपूरकइत्यादि अस्यव्यानस्यकर्मेत्यर्थः ॥ ३० ॥ ननु

तस्यमूत्रपुरीषादिविसर्गःकर्मकीर्तितम् ॥२९॥ व्यानोऽक्षि
श्रोत्रगुल्फेषुजिह्वाघ्राणेषुतिष्ठति ॥ प्राणायामधृतित्यागग्र
हणाद्यस्यकर्मच ॥ ३० ॥ समानोव्याप्यनिखिलंशरीरंवन्हि
नासह ॥ द्विःसप्ततिसहस्रेषुनाडीरंध्रेषुसंचरन् ॥ ३१ ॥

"हृदिप्राणोगुदेपानःसमानोनाभिसंस्थितः । उदानः कंठदेशस्थोव्यानः सर्वशरीरगः" इतिप्राचोक्तम् । अत्रसमानस्यसर्वशरीरव्यापित्वमुक्तमितिपरस्परं स्मृत्योर्विरोधः प्राप्तस्तत्रकाव्यवस्थितिरितिचेदुच्यते। सर्वशरीरव्यापकेनव्याने

नमहाभेदउक्तइतिगृहाण ॥ समानइति ॥३१॥ समानशब्दार्थमाह ॥ भुक्तेति॥
भुक्तस्यचतुर्विधान्नस्यपीतस्यजलादेः रसान् सम्यक्तत्तदवयवेष्वानयन् देहपु
ष्टिंकरोतीतिसमानइत्यर्थः। उदानस्थानमाह॥ पादयोरिति ॥ संधिषुकंठादिषु३२
अस्यकर्माह ॥ कर्मास्येति॥ देहस्यउन्नयनमुत्थापनमुत्क्रांतिश्चएवमादि। उपवा

भुक्तपीतरसान्सम्यगानयन्देहपुष्टिकृत् ॥ उदानःपादयोरास्तेहस्त
योरंगसंधिषु॥३२॥ कर्मास्यदेहोन्नयनोत्क्रमणादिप्रकीर्तितम् ॥ त्वगा
दिधातूनाश्रित्यपंचनागादयःस्थिताः॥ ३३ ॥ उद्गारादिनिमेषादिक्षु
त्पिपासादिकंक्रमात् ॥तंद्रीप्रकृतिशोकादितेषांकर्मप्रकीर्तितम्॥३४॥

युस्थानमाह ॥ त्वगादीति ॥३३॥ त्वङ्मांसशोणितास्थिमज्जास्नायुषुसंहत्यस्थिता
नांनागादीनांकर्माण्याह॥ उद्गारादीति ॥ उद्गारहिक्कावांत्यादिनागस्य। निमेषो
न्मेषकटाक्षादिकूर्मस्य। क्षुत्पिपासाक्षुतादिकृकलस्य। आलस्यनिद्राजृंभणादिदे

वदत्तस्य। प्रकृत्याशोकहासादिधनंजयस्यकर्म क्रमात्प्रकीर्तितम्॥३४॥ तेजःकार्यमाह ॥ अग्नेस्त्विति॥ अग्नेः रोचकप्रभृतीन्धर्मानादत्तइतिपूर्ववदन्वयः। रोचयति प्रकाशयतिघटादीनितिरोचकंचक्षुः। रूपंश्यामिकादि । दीप्तंशुक्लरूपम्। पाकंभुक्तस्यपचनम्। प्रकाशयतीतिप्रकाशता स्फूर्तिः। अमर्षः कोपः। तीक्ष्णं

अग्नेस्तुरोचकंरूपंदीप्तंपाकंप्रकाशताम् ॥ अमर्षतीक्ष्णसूक्ष्माणामोजस्तेजस्तुशूरताम् ॥ ३५॥ मेधावितांतथादत्तेजलात्तुरसनंरसम् ॥ शैत्यंस्नेहंद्रवंस्वेदंगात्रादिमृदुतामपि ॥ ३६ ॥

तीक्ष्णत्वंपरिभवासहिष्णुत्वम्। सूक्ष्मंसूक्ष्मत्वंकाश्यमित्यर्थः । भावप्रधानोनिर्देशः। कारकशेषेषष्ठी। नमाषाणामश्नीयादितिवत्। ओजः शरीरस्थितिप्रयोजकस्तेजोविशेषः। तेजः संतापः। शूरतापराक्रमः॥ ३५ ॥ मेधावितांधारणावत्त्वम्। एतान्धर्मान्। जलात्तुरसनादीनादत्तइत्यन्वयः। रसनमिंद्रियं रसंषड्वि

धं शैत्यंस्नेहं चिक्कणताम् । द्रवंमुखादौलालादि स्वेदंघर्मं शरीरस्य । आदिश ब्दात्करचरणाद्यवयवानांमृदुतांकोमलताम् ॥ ३६ ॥ भूमिसंबंधिनंभावमाह ॥ भूमेरिति ॥ गौरवंगरिमाणं प्रसंगाच्छरीरधारकान्सप्तधातूनाह ॥ त्वगिति ॥

भूमेर्घ्राणेंद्रियंगंधंस्थैर्यंधैर्यंचगौरवम् ॥ त्वगसृङ्मांसमेदो ऽस्थिमज्जाशुक्राणिधातवः ॥ ३७ ॥ अन्नंपुंसाशितंत्रेधाजा यतेजठराग्निना ॥ मलंस्थविष्ठोभागःस्यान्मध्यमोमासतां व्रजेत् ॥ मनःकनिष्ठोभागःस्यात्तस्मादन्नमयंमनः ॥ ३८ ॥

उक्तार्थः ॥ ३७ ॥ प्रसंगाद्भुक्तान्नादेः परिणामभेदमाह ॥ अन्नमिति ॥ पुंसांउप लक्षणमेतत्पश्वादीनामपि । अशितंभक्षितंजठराग्निनापच्यमानंत्रेधाजायते ॥ तत्रस्थविष्ठः स्थूलोभागःमलंपुरीषंस्यात् । मध्यमोभागः मांसतांव्रजेत् । कनि ष्ठोमनःस्यात् । " अन्नमयंहिसौम्यमनः " इतिश्रुतेः । मनसः पंचभूतकार्यत्वे

ऽपिअन्नस्यतदुद्बलकत्वादन्नमयमित्युच्यते । एवं " आपोमयः प्राणस्तेजोमयीवाक् " इत्यत्रापिज्ञेयम् ॥ ३८ ॥ ३९ ॥ तेजसइति ॥ तेजसः घृतादेः अशितस्य । मज्जामध्यान्मध्यमभागात् समुद्भवोयस्यसतथा । कनिष्ठभागात् "वा

अपांस्थविष्ठोमूत्रंस्यान्मध्यमोरुधिरंभवेत् ॥ कनिष्ठभागःप्राणःस्यात्तस्मात्प्राणोजलात्मकः ॥३९॥ तेजसोऽस्थिस्थविष्ठःस्यान्मज्जामध्यसमुद्भवः ॥ कनिष्ठावाङ्मतातस्मात्तेजोऽबन्नात्मकंजगत् ॥ ४० ॥ लोहिताज्जायतेमांसंमेदोमांससमुद्भवं ॥ मेदसोऽस्थीनिजायंतेमज्जावास्थिसमुद्भवः ॥४१॥ नाड्योऽपिमांससंघाताच्छुक्रंमज्जासमुद्भवं ४२

ग्भवति" इतिश्रुतेर्ज्ञेयः । तथाचश्रुतिः । " अन्नमशितंत्रेधाभवति । यःस्थविष्ठोधातुस्तत्पुरीषम् " इत्याद्युपक्रम्य जलभागानुक्त्वातेजोभागद्वयानंतरं " यःकनिष्ठःसवाक् " इति । स्पष्टमन्यत् ॥ ४० ॥ ४१ ॥ ४२ ॥

इदानींशरीरस्थानांकेषांचिद्रसानांपरिणामउच्यते । यद्यपिपूर्वोक्तानांवक्ष्यमाणानांचविकाराणांज्ञानंनमोक्षसाधनंतथापिवैराग्यहेतुत्वादुक्तंभगवताशिवेन । यदध्यासेनप्राणिनोमुह्यंतितस्यशरीरस्यैतादृशीगतिरितिभावः । " परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायात् " इतिश्रुत्यावैराग्यस्याभ्यर्हितत्वेनप्रति

वातपित्तकफाश्चात्रधातवःपरिकीर्तिताः ॥ दशांजलिजलंज्ञेयंरसस्यांजलयोनव ॥ ४३ ॥ रक्तस्याष्टौपुरीषस्यसप्तहिश्लेष्मणश्चषट् ॥ पित्तस्यपंचचत्वारोमूत्रस्यांजलयस्त्रयः॥४४॥

पादनात् ॥ वातेति ॥ एतेपिशरीरेधातवःसंति । यथापंचीकरणप्रक्रियाशास्त्रकारैरुक्तातथेदमंजलिपरिमाणमपितैरेवव्यवस्थापितमायुर्वेदादावितिनात्रशंकाविधेया । तदुक्तम् " अचिंत्याःखलुयेभावानतांस्तर्केणयोजयेत् " इति ॥ दशेति ॥ तत्परिमाणकमित्यर्थः । सम्यक्परिणतस्याहारस्यसारोरसस्तस्य ॥४३॥ ४४॥

वसायामांसस्नेहस्य मेदसोमांसविशेषस्यचद्वौद्वावंजली । मज्जातु अंजलिपरिमितः शुक्रंवीर्यं अर्धांजलितदेवबलप्रदत्वाद्बलमुच्यते ॥ ४५ ॥ अस्थ्नांप्रमाणं

वसायामेदसोर्द्वौतुमज्जात्वंजलिसंमितः ॥ अर्धांजलितथाशुक्रंतदेवबलमुच्यते ॥ ४५ ॥ अस्थ्नांशरीरेसंख्यास्यात्षष्टियुक्तंशतत्रयम् ॥
जलजानिकपालानिरुचकास्तरणानिच ॥ नलकानीतितान्याहुःपंचधास्थीनिसूरयः ॥ ४६ ॥ द्वेशतेत्वस्थिसंधीनांस्यातांतत्रदशोत्तरे ॥
रौरवाःप्रसराःस्कंदसेचनाःस्युरुलूखलाः ॥ ४७ ॥

तुषष्टियुक्तंशतत्रयंबोद्धव्यम् । अस्थीनिपंचधा जलजः शंखः तदाकारत्वाज्जलजानि भ्रूकर्णदेशस्थितानिज्ञेयानि । कपालानिशिरःसंबंधीनि एवमवशिष्टानां निरुक्तिराकरेऽस्तिसानतिप्रयोजनत्वान्नेहलिख्यते ॥ ४६ ॥ ४७ ॥

॥ ४८ ॥ रोम्णांसार्धकोटित्रयं श्मश्रूणिशिरःकेशाश्चमिलित्वात्रिलक्षकाः । एवंदेहस्यस्वरूपंतेतुभ्यंप्रोक्तम् । हेदाशरथे यस्माद्देहरूपादसारःपदार्थो भुवनत्रयेऽपिनास्ति ॥ ४९ ॥ देहेऽस्मिन्निति ॥ अस्मिन् उक्तस्वरूपेदेहेअहं

> सम्मुद्गामंडलाःशंखावर्तावामनकुंडलाः ॥ इत्यष्टधासमुद्दिष्टाः शरीरेष्वस्थिसंधयः ॥ ४८ ॥ सार्धकोटित्रयंरोम्णांश्मश्रुकेशा स्त्रिलक्षकाः ॥ देहस्वरूपमेवंतेप्रोक्तंदशरथात्मज ॥ यस्माद सारोनास्त्येवपदार्थोभुवनत्रये ॥ ४९ ॥ देहेऽस्मिन्नभिमानेन नमहोपायबुद्धयः ॥ अहंकारेणपापेनक्रियंतेहंतसांप्रतम् ॥५०॥

कारेणकर्त्रापापेनहेतुनामहउत्सवः । "महउद्धवउत्सवः" इत्यमरः । अत्र मोक्षएवउत्सवोमुख्यइतरेषांक्षयिष्णुत्वात् । भाक्तमुत्सवत्वंतस्य उपायोमोक्षोपा

यइत्यर्थः । तस्मिनूबुद्धयोऽविचारान्नक्रियंते । हंतखेदे ॥ ५० ॥ तस्मादेतस्याहं कारास्पदस्यस्वरूपमुक्तलक्षणंमनीषिणावश्यंबोद्धव्यम् । विरक्तिदार्ढ्यायेतिभा वः ॥५१॥ इतिशिवगीताटीकायांनवमोऽध्यायः ॥९॥ एवमुक्तप्रकारेणदेहस्वरू

तस्मादेतत्स्वरूपंतुविबोद्धव्यंमनीषिणा ॥५१॥ इतिश्रीपद्म
पुराणे शिवगीता० शरीरनिरूपणंनामनवमोऽध्यायः ॥९॥
श्रीरामउवाच ॥ भगवन्नत्रजीवोऽसौजंतोर्देहेऽवतिष्ठते ॥
जायतेवाकुतोजीवःस्वरूपंवास्यकिंवद ॥ १ ॥

पंविज्ञायजीवस्वरूपंविविदिषूरामउवाच ॥ भगवन्निति ॥ हेभगवन्नचिंत्यमहा विभूतेऽस्मिन्जंतोर्देहेऽसौपरोक्षोजीवःकिमवतिष्ठते जायतेवा । किंच । कुतःकार णाज्जीवइत्युच्यते । जीवत्वंकिंस्वाभाविकमाविद्यकंचेतिभावः । अस्यजीवस्य

स्वरूपंवाकिंचिदात्मकंतद्विलक्षणंवेत्यर्थः। एतद्वद ॥१॥ देहांतेचकुत्रगच्छतिकुत्र चतिष्ठति। पुनर्देहंकथमायातियदिवापुनर्देहंनायातितदपिवद। अत्रसर्वेषुपक्षेषुदू षणसद्भावः। संशयबीजंविनासंशयप्रश्नानुत्थानात् ॥२॥ एवंपृष्टो भगवानुवाच

देहांतेवाकुत्रयातिगत्वावाकुत्रतिष्ठति॥कथमायातिवादेहंपुनर्नायाति वावद ॥ २ ॥ श्रीभगवानु० ॥ साधुपृष्टंमहाभागगुह्याद्गुह्यतमंहियत् ॥ देवैरपिसुदुर्ज्ञेयमिंद्राद्यैर्वामहर्षिभिः ॥३॥ अन्यस्मैनैववक्तव्यंमयापिर घुनंदन ॥त्वद्भक्तयाहंपरंप्रीतोवक्ष्याम्यवहितःशृणु ॥४॥ सत्यज्ञानात्म कोऽनंतःपरमानंदविग्रहः॥ परमात्मापरंज्योतिरव्यक्तोऽव्यक्तकारणं५

॥साध्विति ॥ त्वदुक्तसर्वपक्षेषुबाधकसंभवाद्गुरूपदेशेनविनादुर्ज्ञेयत्वात्साधुपृ ष्टमितिभावः। इदंतत्त्वंगहनमित्याह ॥गुह्यादिति ॥३॥४॥ प्रतिबिंबस्यजीवस्य स्वरूपंविवक्षुरादौबिंबस्वरूपमाह। सार्धश्लोकेनवाक्येन ॥ सत्येत्यादिना ॥

अव्यक्तःअविद्यावृतजीवानांगूढःअव्यक्तस्यमायायाः कारणंभासकः ॥ ५॥ निर्लेपोनिःसंगउपचयशून्योवा निरंजनःक्रियारहितः। लिपउपदेहे उपदेहोवृद्धिः। अंजूव्यक्तिम्रक्षणकांतिगतिषु। इतिधातुद्वयादुक्तार्थौवेदितव्यः॥ ६॥ नचैवंस

नित्योविशुद्धःसर्वात्मानिर्लेपोऽहंनिरंजनः ॥ सर्वधर्मविहीनश्चन ग्राह्योमनसापिच ॥ ६॥ नाहंसर्वेंद्रियग्राह्यः सर्वेषांग्राहकोह्यहम्॥ ज्ञाताहंसर्वलोकस्यममज्ञातानविद्यते ॥ ७॥ दूरःसर्वविकाराणांप रमाण्वादिकस्यच ॥ ८॥ यतोवाचोनिवर्तंतेअप्राप्यमनसासह ॥

र्वप्रत्ययवेद्यंब्रह्मेतिवार्तिककृतोक्तंविरुध्येतेतिवाच्यम्। प्रपंचतादात्म्यापन्नस्यसर्वप्रत्ययवेद्यत्वेऽपिशुद्धस्योपनिषदेकगम्यत्वात् ॥७॥ दूरइति॥ सर्वविकाररहितः। अनेनपरिणामवादोनिरस्तःपरमाण्वादिकस्येत्यनेनारंभवादोऽपिनिरस्तः। विवर्तवादस्तुपूर्वाध्यायेस्फुटमभ्युपगतः ॥ ८॥ यतोवाचइति ॥ षष्ठाध्याये

व्याख्यातम् ॥ ९ ॥ यस्त्विति ॥ मय्यध्यस्तानीति मांचतेष्वनुस्यूतंपश्यति त
तोऽनंतरंनविजुगुप्सतेब्रह्मात्मनैवसर्वग्रहणान्नकिंचिदपिनिंदतीत्यर्थः ॥ १० ॥
यस्येति ॥ आत्मैवसत्यः सर्वमन्यन्मिथ्येतिबोधायसामानबोधिकरण्यभूतशो

आनंदंब्रह्ममांज्ञात्वानबिभेतिकुतश्चन ॥ ९ ॥ यस्तुसर्वाणिभूता
निमय्येवेतिप्रपश्यति ॥ मांचसर्वेषुभूतेषुततोनविजुगुप्सते ॥१०॥
यस्यसर्वाणिभूतानिह्यात्मैवाभूद्विजानतः ॥ कोमोहस्तत्रकःशोक
एकत्वमनुपश्यतः ॥ ११ ॥ एषसर्वेषुभूतेषुगूढोत्मानप्रकाशते ॥
दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिः ॥ १२ ॥

कमोहयोर्भेदः । सापेक्षत्वात् ॥ ११ ॥ ननुतर्हिसर्वेकुतोवात्वामात्मत्वेननपश्यंती
त्याशंक्यश्रुत्यापरिहरति। यत्साक्षादपरोक्षाद्ब्रह्मेति प्रत्यक्षसिद्धोऽपि मूढानांगूढ
आत्मानप्रकाशते यथोलूकस्यजगत्प्रकाशकःसवितातद्वत् । तर्हिकैःप्रत्यक्षीक्रि

यतइत्यतआह । अव्ययाश्रवणादिसाधनसंस्कृतयाबुद्धयासूक्ष्मदर्शिभिः सूक्ष्म ब्रह्मद्रष्टुंशीलंयेषांतैर्दृश्यते आत्मत्वेनापरोक्षीक्रियतेनत्वन्यैः । बहिर्मुखैरित्यर्थः । गूढोत्मेतिपृषोदरादित्वात्साधुत्वम् ॥ १२ ॥ नन्वद्वितीयश्चेत्त्वंकथंतर्हिजगदुत्पत्तिस्त्वत्तःस्यात्परिणामिनोऽन्यस्यविरहादित्याशंक्याह ॥अनादीति ॥ यद्यप्ये

अनाद्यविद्ययायुक्तस्तथाप्येकोऽहमव्ययः ॥ अव्याकृतब्रह्म
रूपोजगत्कर्तामहेश्वरः ॥१३॥ ज्ञानमात्रेयथादृश्यमिदंस्व
प्नेजगत्त्रयम् ॥ तद्वन्मयिजगत्सर्वंदृश्यतेऽस्तिविलीयते ॥१४॥

कोऽहंसजातीयविजातीयस्वगतभेदशून्यः अव्ययोनिर्विकारस्तथापिअनाद्यविद्ययायुक्तःसन्अव्याकृतंनामतोरूपतश्चानभिव्यक्तं अविद्याशबलंब्रह्मतत्स्वरूपोभूत्वाजगत्कर्तास्मीतिशेषः ॥ १३ ॥ ज्ञानमात्रइति ॥ यथास्वप्नेइदंजगत्त्रयंअविद्ययासाक्षिणिज्ञानमात्रेकल्प्यते । तद्वन्मयीदंसर्वंजगद्दृश्यतेऽस्तिवि

लीयते। तथाचजाग्रत्प्रपंचोमिथ्या दृश्यत्वात्स्वप्नवदित्यनुमानमपिश्रुत्युक्तमुप ष्टंभकंज्ञेयम्। "मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः" इत्यादिश्रुतयःप्रमाणम्१४ नन्वेतावताप्रबंधेनपरमात्मस्वरूपेनिरूपितेऽपिमयोपक्रांतेषुजीवविषयकेषुप्र श्नेषूत्तरंनलब्धमेवेत्याशंक्याह ॥ नानेति ॥ अहमेवप्रपंचेजीवत्वेनवसामीति संबंधः। अनेनजीवस्यस्वरूपंकीदृशमितिप्रश्नेसच्चिदात्मकमित्युत्तरंसूचितम्। किं

नानाविद्यासमायुक्तोजीवत्वेनवसाम्यहम् ॥ पंचकर्मेंद्रियाण्येवपं चज्ञानेंद्रियाणिच ॥ मनोबुद्धिरहंकारश्चित्तंचेतिचतुष्टयम् ॥ १५ ॥

च उत्पद्यतेनवेतिप्रश्ने नोत्पद्यतइत्यपिसूचितम्। मत्स्वरूपत्वेनानाद्यनंतत्वात्। नानाविद्यासमायुक्त इत्यनेनमूलाविद्यावच्छिन्नानामनेकेषां जीवानामेकमुक्तौ नसर्वमुक्तिरितिसूचितम् ॥ अविद्याशब्देनावरणंसूचयता मुक्तसंसारिणोर्विशेषो प्युपपादितः। मुक्तस्यानावृतत्वात् कृतानांप्रश्नानांमध्येजीवस्यलोकांतरगमनाग

मनादिप्रश्नद्वयमवशिष्टंतदपिलिंगशरीरोपाहितस्यनानुपपन्नमितिप्रतिपादयन् लिंगशरीरमाह ॥ पंचेति ॥ इदमेवाचार्याः संजगृहुः । "पंचप्राणमनोबुद्धिदशेंद्रियसमन्वितम् अपंचीकृतभूतोत्थंसूक्ष्मांगंभोगसाधनम् । इति अंतःकरणेनसहषोडशकलंलिंगंतद्वतिभेदेगृहीतेऽपिनविरोधः ॥१५॥१६॥ तत्रेति ॥ तत्रलिंगशरी

वायवःपंचमिलितायांतिलिंगशरीरताम् ॥ १६ ॥ तत्रावि
द्यासमायुक्तंचैतन्यंप्रतिबिंबितम् ॥ व्यावहारिकजीवस्तुक्षे
त्रज्ञःपुरुषोऽपिवा ॥ १७ ॥ सएवजगतांभोक्तानाद्ययोःपुण्य
पापयोः ॥ इहामुत्रगतीतत्रजाग्रत्स्वप्नादिभोक्तृता ॥१८॥

रे अविद्ययासमायुक्तंतदवच्छिन्नमीश्वरचैतन्यंप्रतिबिंबितंसत् व्यावहारिकोव्यवहारक्षमोजीवः क्षेत्रज्ञःपुरुषशब्दवाच्योऽपि भवतीतिशेषः ॥१७॥ सएवेति ॥ न आद्येऽनाद्येतयोःप्रवाहरूपेणानादिरूपयोः पुण्यपापादृष्टयोः । कार्यभूतानांजग

तांजगच्छब्दोपलक्षितस्थावरजंगमशरीरायतनानांभोगानामित्यर्थः । भोक्तात
त्रलिंगदेहेनिमित्तभूतेसतीत्यर्थः । इहामुत्रगतीभवतः जीवस्येतिशेषः । जाग्रत्स्व
प्नादिभोक्तृताचभवति । जीवस्यभोक्तृत्वमौपाधिकमेवनवास्तवमितिभावः । त
दुक्तम् " आत्माकर्त्रादिरूपश्चेन्माकांक्षीस्तर्हिमुक्तताम् । नहिस्वभावोभावा

यथादर्पणकालिम्नामलिनंदृश्यतेमुखम् ॥ तद्वदंतःकरणगैर्दो
षैरात्मापिदृश्यते ॥ १९ ॥ परस्पराध्यासवशात्स्यादंतःकर
णात्मनोः ॥ एकीभावाभिमानेनपरात्मादुःखभागिव २०

नांव्यावर्तेतौष्ण्यवद्रवेः" इति ॥ १८ ॥ तदेवदृष्टांतेनोपपादयति ॥ यथेति ॥ य
थादर्पणस्यकालिम्नाश्यामत्वेनतद्गतंमुखंमलिनंदृश्यते । तद्वदंतःकरणगैर्दोषैः का
मक्रोधादिभिरात्माजीवोऽपिमलिनोदृश्यते ॥ १९ ॥ परस्परेति ॥ अन्योन्यतादा
त्म्याध्यासवशात् अंतःकरणंचआत्माजीवश्चतयोरेकीभावेन तद्रूपेणाभिमानेने

त्यर्थः। परमात्मानिःसंगोऽपिदुःखभागिवस्यात्। नतुदुःखभाक् दुःखस्यविषय सत्ताकत्वादितिभावः ॥ २०॥ मरुभूमाविति ॥ मरुभूमौधन्वदेशेमूढचित्तस्यज लेनगृह्यमाणाअपिमध्याह्नार्कस्यमरीचिकाःमरीचयःआर्द्रानहिदृश्यंते । किंतुसं तापकारकाएव ॥ २१ ॥ दार्ष्टांतिकेसमर्थयति ॥ तद्वदिति ॥ आत्माजीवःनिर्ले

मरुभूमौजलत्वेनमध्याह्नार्कमरीचिकाः॥ दृश्यंतेमूढचित्तस्यन ह्यार्द्रास्तापकारकाः ॥ २१ ॥ तद्वदात्मापिनिर्लेपोदृश्यतेमूढचे तसाम् ॥ स्वाविद्यात्मात्मदोषेणकर्तृत्वादिकधर्मवान् ॥ २२ ॥

पोऽपिकर्तृत्वादिकधर्मवान् । स्वाविद्यात्मनास्वविषयकाविद्यारूपेणआत्मन्य ध्यस्तेनदोषेणमूढचेतसामविवेकिनांदृश्यते नतुविवेकिनामितिभावः । इदमेवा भिप्रेत्यभाष्यकाराआहुः। "यत्रानध्यासःसतत्कृतेनाणुनापिगुणेनदोषेणवानलि प्यते" इति आरोपितेनारुणिम्नास्फटिकस्यस्वच्छत्वानपायादितिभावः॥२२॥

व्यापकस्याप्यात्मनऔपाधिकपरिच्छेदंपूर्वोक्तंद्रढयति ॥ तत्रेति॥ अन्नमयेअन्नस्यविकारेपिंडेस्थूलदेहेतत्रतस्मिन्आनखाग्रंव्याप्यजीवोहृदिअवतिष्ठते । औपाधिकमल्पपरिमाणत्वंभजतइत्यर्थः। तदेवब्रुवेअवहितःसन्शृणु ॥ सोऽयमिति ॥ सोऽयंमांसपिंडःतदभिमानेनजीवतादात्म्याध्यासबलेनविराजते। मनुष्योऽहं

> तत्रचान्नमयेपिंडेहृदिजीवोऽवतिष्ठते ॥ आनखाग्रंव्याप्य
> देहंतद्ब्रुवेऽवहितःशृणु ॥ सोऽयंतदभिमानेनमांसापिंडोविरा
> जते ॥ २३ ॥ नाभेरूर्ध्वमधःकंठाद्व्याप्यतिष्ठतियत्सदा ॥
> तस्यमध्येऽस्तिहृदयंसनालंपद्मकोशवत् ॥ २४ ॥

ब्राह्मणोऽहमित्यभिमन्यतइत्यर्थः ॥ २३ ॥ इदानींहृदयावच्छेदप्रयुक्तामल्पताप्रपंचयितुंहृदयस्वरूपंतावदाह ॥ नाभेरिति ॥ नाभेरूर्ध्वंकंठादधश्चयत्स्थलंव्याप्यप्राणवायुस्वरूपंतिष्ठति तस्यवायुसंचारस्थलस्यमध्येहृदयंतिष्ठति। सनालं

पद्मकोशवत्तत्सन्निभमित्यर्थः ॥ २४ ॥ अधोमुखमिति ॥ हृदयविशेषणं तत्र तस्मिन्हृदयेपद्मेसूक्ष्मंसुषिरंछिद्रमुत्तमंजीवाधिष्ठानत्वात् अस्तितद्दहराकाश मित्युक्तंश्रुतिभिःस्मृतिभिश्चेतिशेषः। छांदोग्यस्याष्टमाध्याये। "अथयदस्मिन् ब्रह्मपुरेदहरं वेश्मदहरोऽस्मिन्नंतराकाशस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वावजिज्ञा

अधोमुखंचतत्रास्तिसूक्ष्मंसुषिरमुत्तमम् ॥ दहराकाशमित्युक्तं
तत्रजीवोऽवतिष्ठते ॥ २५ ॥ वालाग्रशतभागस्यशतधाकल्पि
तस्यच ॥ भागोजीवःसविज्ञेयःसचानंत्यायकल्पते ॥ २६ ॥

सितव्यं" इतिप्रतिपादितम्। उक्तंचाभियुक्तैः "उपलब्धेरधिष्ठानंब्रह्मणोदेहउ च्यते ॥ तेनसाधारणत्वेनदेहोब्रह्मपरंभवेत्" इति। "दहरउत्तरेभ्यः" इ त्यधिकरणे ब्रह्मैवदहराकाशइतिनिर्णीतं तत्रजीवोऽवतिष्ठतइत्यनेनजीवब्रह्मणो रभेदएवपरमार्थतइतिभावः सूचितः ॥ २५ ॥ वालाग्रेति ॥ वालाग्रंकेशाग्रंतस्य

शतभागः शततमांशःसोऽपिशतधाकल्प्यः। तस्यापियोभागःसजीवोविज्ञेयः उ
पाधिवशाद्यइतिसूक्ष्मइत्यर्थः। वास्तवंतुजीवस्वरूपमाह ॥ सचेति॥ आनंत्या
यपरिच्छेदविरहायसमर्थोभवति। उपाध्यपगमेसतीतिभावः ॥ २६॥ अथजी
वप्रसंगाद्रुपासकानांमूर्धन्ययानाड्याउत्क्रमणपूर्विकांक्रममुक्तिंकथयितुंनाडीस्ता

कदंबकुसुमोद्बद्धकेशराइवसर्वतः॥ प्रसृताहृदयान्नाड्योया
भिर्व्याप्तंशरीरकम्॥ २७॥ हितंबलंप्रयच्छंतितस्मात्तेनहि
ताःस्मृताः॥ द्वासप्ततिसहस्रैस्ताःसंख्यातायोगवित्तमैः २८

वत्प्रपंचयति॥कदंबेति॥ तथाचश्रुतिः “ शतंचैकाहृदयस्यनाड्यस्तासांमूर्धानम
भिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्याउत्क्रमणेभवंति”इति। यद्यपि
द्वासप्ततिसहस्रसंख्याकानांनाडीनांकदंबोनाभौतिष्ठतितथापिहृदयसंबंधोऽप्य
स्तीतिहृदयादित्युक्तम्। याभिर्नाडीभिःशरीरकंव्याप्तम् ॥ २७॥ हितामिति॥

हितशब्दस्यविवरणंबलमिति । यस्मात्कारणात्प्रयच्छंतितेनकारणेनहिताः स्मृताः । हितानामहृदयस्यनाड्यइतिश्रुतिसिद्धैषासंज्ञा । तासांसंख्यामाह ॥ द्वासप्ततिसहस्त्रैरिति ॥ २८ ॥ हृदयादिति ॥ दृष्टांतमाह ॥ यथेति ॥ तासुपूर्वोक्तसंख्यावतीषुनाडीषुएकाधिकशतंमुख्याः । विष्वक्सर्वतःविनिर्गताःप्रसृताः

हृदयात्तास्तुनिष्क्रांतायथार्काद्रश्मयस्तथा ॥ एकोत्तरशतंता
स्तुमुख्याविष्वग्विनिर्गताः ॥ २९ ॥ वहंत्यंभोयथानद्योना
ड्यःकर्मफलंतथा ॥ अनंतैकोर्ध्वगानाडीमूर्धपर्यंतमंजसा॥३०॥

॥२९॥ वहंतीति ॥ यथानद्योऽभउदकंवहंतितथानाड्यःकर्मफलंसुखदुःखादिवहंति तास्वेकोत्तरशतसंख्याकासुएकासुषुम्नाख्याअंजसाआंजस्येनार्जवेनेतियावत् । मूर्धपर्यंतंऊर्ध्वंगच्छतीतिऊर्ध्वगा अनंतफलत्वाच्चानंतासैवोच्यते॥ ३० ॥

अनंतफलत्वमेवप्रतिपादयितुंइतरासांफलंतावदाह ॥ प्रतींद्रियमिति ॥ ज्ञानक
र्मेंद्रियाणिमिलित्वादश प्रतींद्रियंदशदशनिर्गताः । तत्तदिंद्रियविषयाः शब्दाद
योज्ञानेंद्रियाणां वचनादयःकर्मेंद्रियाणां तान्प्रत्यभिमुखाः । शर्मसुखंआदिपदा
द्दुःखंचतयोर्हेतुत्वात् । स्वप्नहेतुत्वाच्चयथायथंजाग्रदादिसुखादिसाक्षात्कारायोप

प्रतींद्रियंदशदशनिर्गताविषयोन्मुखाः ॥ नाड्यःशर्मादिहे
तुत्वात्स्वप्नादिफलभुक्तये॥३१॥ सुषुम्नेतिसमादिष्टातयाग
च्छन्विमुच्यते॥तयोपचितचैतन्यंजीवात्मानंविदुर्बुधाः॥३२॥

युज्यंतइतिफलितोऽर्थः ॥३१॥ सुषुम्नायाः फलमाह॥ सुषुम्नेति ॥ समादिष्टास
म्यगुक्ताश्रुतिभिरितिशेषः ॥ तयागच्छन्मुच्यतेमुक्तोभवति ॥ हिप्रसिद्धौ । न
नुसुषुम्नायानिर्गमनेनमोक्षश्चेत्तर्हिज्ञानादेवतुकैवल्यमित्यादिश्रुतिस्मृतिव्याको
पः प्रसज्येतेत्याशंक्याह ॥ तयेति ॥ उपचितंकामादिदोषविरहेणोपासाबलवि

शिष्टंसत् आविर्भूतमित्यर्थः। चैतन्यंजीवात्मानंबुधाविदुः नतुजीवदशानिवृत्ते तिभावः। तथाचोपासकस्यसुषुम्नयागच्छतः पुरुषस्यब्रह्मलोकावाप्तिरूपागौ णीमुक्तिरेवनपरमामुक्तिरिति नोक्तश्रुतिस्मृतिव्याकोपइतिभावः। ब्रह्मलोकइव निर्गुणसाक्षात्कारेऽपिपरमामुक्तिर्भवति ॥३२॥ जीवस्यसर्वगतस्यापिलिंगशरीर

यथाराहुरदृश्योऽपिदृश्यतेचंद्रमंडले ॥ तद्वत्सर्वगतोऽप्यात्मालिंगदेहेऽपिदृश्यते ॥३३॥ दृश्यमानेयथाकुंभेघटाकाशोऽपिदृश्यते ॥ तद्वत्सर्वगतोऽप्यात्मालिंगदेहेऽपिदृश्यते ॥ ३४ ॥ निश्चलःपरिपूर्णोऽपिगच्छतीत्युपचर्यते ॥ जाग्रत्कालेयथाज्ञेयमभिव्यक्तविशेषधीः ॥ ३५ ॥

एवाभिव्यक्तिर्नान्यत्रेतिसदृष्टांतमाह ॥ यथाराहुरिति ॥ अभिव्यक्तिविषयक एवदृष्टांतोग्राह्यः। नहिदृष्टांतेसर्वंसाम्यमितिन्यायात् ॥३३॥३४॥ तस्यजीवस्य व्यापकत्वेऽपिलिंगदेहावच्छेदेनैवप्रमातृत्वमित्युपपादयन्नाह ॥ निश्चलइति ॥

निश्चलः निष्क्रियः तत्रहेतुः परिपूर्णः एतादृशोऽपिगच्छतीत्युपचर्यते । ज्ञेयंघटा
दिकमनतिक्रम्य । यथाज्ञेयं घटाद्याकारांतःकरणवृत्ति तथा अभिव्यक्ता निवृ
त्तावरणा याविशेषधीर्घटाद्युपहितचैतन्यंयस्यतथाभूतःसन् जाग्रत्कालेसर्वान्बा
ह्यपदार्थान्व्याप्नोति । इयमत्रप्रक्रिया । त्रिविधंचैतन्यंप्रमातृचैतन्यंप्रमाणचैतन्यं
विषयचैतन्यंचेति । यदासमानकालेसमानदेशेवृत्त्यवच्छिन्नंचैतन्यंइंद्रियद्वारावि

व्याप्नोतिनिष्क्रियःसर्वान्भानुर्दशदिशोयथा ॥

षयंप्रतिगत्वातंविषयंव्याप्नोतितदाचैतन्यत्रयमेकंभवति तदाघटादिपदार्थज्ञानं
भवति। त्रयाणामंतःकरणतद्वृत्तिघटाद्युपाधीनामेकदेशस्थत्वेसत्येककालीनत्वेस
त्युपाधेयाभेदप्रयोजकत्वनियमात् । अतएवपर्वतंपश्यामि वह्निमनुमिनोमीत्यनु
व्यवसायः। वृत्त्यवच्छिन्नचैतन्यवह्न्यवच्छिन्नचैतन्ययोः संबंधाभावात् प्रमातृचैत
न्यविषयचैतन्याभिन्नत्वमेवप्रत्यक्षत्वमित्यन्यत्रविस्तरः॥३५॥ लिंगदेहसमुद्भवात्

त्तयोनाडीभिर्द्वाररूपाभिर्बहिर्यांति । विषयंव्याप्यैवंप्रकाशयंतीत्यर्थः । स्वप्नेतु विषयारथादयइंद्रियवृत्तयः सर्वंप्रातिभासिकमेवेतिव्यवस्थापितमाकरे ॥ ३६॥ तत्तदिति ॥ तेषांतेषांमातृणांयानिप्रारब्धकर्माणितेषामनुसारेणानुकूल्येनतत्प्र

नाडीभिर्वृत्तयोयांतिलिंगदेहसमुद्भवाः ॥ ३६ ॥ तत्तत्कर्मा
नुसारेणजाग्रद्भोगोपलब्धये ॥ इदंलिंगंशरीराख्यमामोक्षं
नविनश्यति ॥ ३७ ॥ आत्मज्ञानेननष्टेऽस्मिन्सा विद्येस्वश
रीरके ॥ आत्मस्वरूपावस्थानंमुक्तिरित्यभिधीयते ॥३८॥

मातृणांजाग्रद्दशायांमेभोगाःसुखदुःखसाक्षात्कारास्तेषामुपलब्धयेज्ञानायप्राप्त येवा । यस्यैतावृत्तयः कथितास्तदिदंलिंगशरीरंआमोक्षंमोक्षंमर्यादीकृत्यनविन श्यति । मोक्षेतुविनश्यतीतिभावः॥३७॥ आत्मेति॥ ऐक्यज्ञानेनेत्यर्थः। आत्म

स्वरूपेणसच्चिदानंदस्वरूपेणावस्थानंमुक्तिरित्यभिधीयते ॥ ३८ ॥ उत्पादित इति ॥ पूर्णमाकाशंघटेउत्पन्नेसतिघटाकाशत्वमृच्छतिप्राप्नोति तद्वल्लिंगशरीरेजाते जीवचैतन्यमभिव्यंजते। घटेनष्टेसतियथाकाशंस्वरूपेणावतिष्ठते तथालिंगभंगे जीवः स्वरूपेणसच्चिदानंदात्मनावतिष्ठते। "तदापीतेःसंसारव्यपदेशात्" इत्य

उत्पादितेघटेयद्वद्घटाकाशत्वमृच्छति ॥ घटेनष्टेयथाकाशं
स्वरूपेणावतिष्ठते ॥ ३९ ॥ जाग्रत्कर्मक्षयवशात्स्वप्नभोगउ
पस्थिते॥बोध्यावस्थांतिरोधायदेहाद्याश्रयलक्षणाम् ॥ ४० ॥

स्मिन्नधिकरणेतथैवव्यवस्थापनात्। अवतिष्ठतइतिसमवप्रविभ्यःस्थइतितङ् ॥ ॥३९॥ जाग्रदवस्थामभिधायस्वप्नावस्थामाह ॥ जाग्रादिति॥ जाग्रद्भोगप्रदंयत्कर्मतस्यक्षयवशात् प्रतिबंधवशात् स्वप्नभोगप्रदेकर्मण्युद्बुद्धेसति किंकृत्वायेजाग्रत्कालीनदेहगेहादयस्तेषामाश्रयणमाश्रयः साक्षात्कारइतियावत्। तल्लक्षणां

बोधावस्थांतिरोधायआच्छाद्य ॥ ४० ॥ कर्मेति ॥ कर्मणास्वप्नभोगप्रदेनउ
द्भावित उद्बोधितः संस्कारः स्वप्नगजादिजनकीभूतोयस्यसतथा । रिरंसयास्व
प्नेनायंरमतामित्याकारिकयेश्वरेच्छयेत्यर्थः । रमेरंतर्भावितण्यर्थात्सन् ततोभावे
अप्रत्ययः । स्वप्नजाताघटपटादयः पदार्थाअनुभूयंते सचानुभूतोनप्रमारूपः प्र
माकरणानामिंद्रियार्थसंन्निकर्षादीनामभावात् । तस्मात्स्वप्नोपलब्धरथादीना

कर्मोद्भावितसंस्कारस्तत्रस्वप्नरिरंसया ॥

मागंतुकनिद्रादिदोषजन्यत्वात् प्रातिभासिकत्वम् । यत्राध्यासेत्वविद्यैवदोष
त्वेनहेतुस्तत्रव्यावहारीकत्वं यत्रविद्याचागंतुकदोषश्चेतिद्वयमध्यासेहेतुस्तत्रप्रा
तिभासिकत्वमितिसिद्धांतः । ननुस्वप्नस्थलेपूर्वानुभूतरथादेः स्मरणमात्रेणैवव्य
वहारोपपत्तौरथादिसृष्टिकल्पनंगौरवादसांप्रतमितिचेन्न । स्वप्नेरथाद्यद्राक्षमि
त्यनुभवविरोधापत्तेः । "अथरथान्रथयोगान्पथः सृजते" इतिसंध्येसृष्टिराह

हि।“मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपकम्” इतिरथादिसृष्टिप्रतिपादक श्रुतिन्यायविरोधापत्तेश्च। अतएवदेशकालादिसर्वंप्रातिभासिकमेव।स्वप्नसृष्टिः साक्षान्मायापरिणामइतिप्रतिपादयति ॥ आत्ममाययेति ॥ तथाचमायावीजी वोजाग्रदवस्थातोऽन्यामवस्थामुक्तरूपांप्रयातीत्यन्वयः । विस्तरस्तुदीक्षिती

अवस्थांचप्रयात्यन्यांमायावीचात्ममायया ॥४१॥
घटादिविषयान्सर्वान्बुध्यादिकरणानिच ॥ भूता
निकर्मवशतोवासनामात्रवस्थितान् ॥ ४२ ॥

यग्रंथादवगंतव्यइतिदिक् ॥४१॥ स्वप्नपदार्थानांशुक्तिरजतादिवत्केवलसाक्षिवे द्यत्वमाह ॥ घटादीति ॥ सार्धश्लोकेन ॥ वासनयामातरिप्रमातरिअवस्थिता न् अंतःकरणोपहितचैतन्येअध्यस्तानित्यर्थः। तथाभूतान्सर्वान्घटादिविषयान् तथाकर्मवशतोभूतान्युत्पन्नानिबुध्यादीनिकरणानिच। एतान्पदार्थान्पश्यन्भास

यन् साक्षिभूतात्मावतिष्ठतइतिसंबंधः ॥ ४२ ॥ ४३ ॥ ननुस्वप्नसृष्टेरभ्युपगमेक थंतस्यावासनामात्रवस्थानत्वमितिव्यवहारइत्याशंक्याह ॥ अत्रेति ॥ अत्रस्व प्नेपूर्वोक्तानांपदार्थानामंतःकरणादीनां वासनात् वासनाख्यसंस्कारप्रभवत्वा त् वासनात्मत्वंवासनास्वरूपत्वमितियावत् । तेनकारणेनपरात्मनोवासनामा

एतान्पश्यन्स्वयंज्योतिःसाक्ष्यात्माव्यवतिष्ठते ॥४३॥अत्रांतःकरणा दीनांवासनाद्वासनात्मता ॥ वासनामात्रसाक्षित्वंतेनतच्चपरात्मनः ॥ ४४ ॥ वासनाभिःप्रपंचोऽत्रदृश्यतेकर्मचोदितः ॥ जाग्रद्भूमौयथातद्व त्कर्तृकर्मक्रियात्मकः॥४५॥निःशेषबुद्धिसाक्ष्यात्मास्वयमेवप्रकाशते॥

त्रसाक्षित्वम् ॥ ४४ ॥ वासनाभिरिति ॥ वासनाभिःसंस्कारैरत्रस्वप्नेप्रपंचःक र्मणाप्राक्तनेनचोदितःसन्दृश्यते । यथाजाग्रद्भूमौतद्वत् । जाग्रतिव्यावहारिक त्वंप्रपंचस्य स्वप्नेतुप्रातिभासिकत्वमितीयान्भेदइतिभावः ॥४५॥ निःशेषेति ॥

निःशेषाणाबुद्धीनांबोधविषयाणाम् । कर्मणिक्तिन् । साक्षिभूतआत्मास्वयमेवप्र
माणजन्यवृत्तिनिरपेक्षःसन्नेवप्रकाशते । सर्वत्रप्रातिभासिकरजतादिस्वप्नस्थले
तत्तदाकारविद्यावृत्तिःसांप्रदायिकैरंगीकृता।तस्मात्स्वप्नस्तुकेवलमक्षिभास्यएव
। केवलसाक्षिभास्यत्वंनामइंद्रियानुमानादिप्रमाणव्यापारमंतरेणाविद्यावृत्त्यैव
भास्यत्वम् । साक्षीतूक्तप्रकारेणस्वयमेवभासतइतिभावः । तदेतत्पूर्ववासनामा

वासनामात्रसाक्षित्वंसाक्षिणःस्वापउच्यते ॥४६॥ भूतजन्मनियद्भूतं
कर्मतद्वासनावशात ॥ नेदीयस्त्वाद्वयस्याद्येस्वप्नंप्रायःप्रपश्यति ४७

त्रसाक्षित्वंयत्साक्षिणः स स्वापःस्वप्नउच्यते ॥ ४६ ॥ भूतजन्मनीति ॥ भूता
नामनुभूतानांव्यावहारिकाणांजन्मनिजाग्रत्कालेइतियावत् । यद्यद्भूतंस्तन्यपा
नकंदुकक्रीडादिकंकर्मतद्विषयवासनाप्राबल्यादाद्येवयसिस्वप्नमपिप्रायस्तद्रूपंप
श्यति। अत्रहेतुः। नेदीयस्त्वादितिसन्निहितकालिकानुभवगोचरसजातीयत्वादि

त्यर्थः। अतिशयेनांतिकंनेदीयः। "अंतिकबाढकयोर्नेदसाधौ" इतिनेदादेशः ॥४७॥ मध्यइति ॥ तारुण्येकरणानामिंद्रियाणांकार्कश्यात्पाटवादर्दितःबहुतर व्यापारपीडितःसन्वासनासंस्कारस्तत्सहितंयत्कर्मस्वस्वोचिताध्ययनयुद्धकृषि वाणिज्यादिजाग्रत्कालानुभूतंतत्सजातीयमेवसंस्कारवशात्प्रायेणवीक्षतेपश्यति

मध्येवयसिकार्कश्यात्करणानामिहार्दितः ॥ प्रा
येणवीक्षतेस्वप्नंवासनाकर्मणोर्वशात् ॥ ४८ ॥
इयासुःपरलोकंतुकर्मविद्यादिसंभृतम् ॥ भावि
नोजन्मनोरूपंस्वप्नआत्माप्रपश्यति ॥ ४९ ॥

॥ ४८ ॥ इयासुरिति ॥ परलोकंस्वर्गंनरकंवाइयासुःसंभावितपरलोकगमनइ तियावत्। आशंकायांसन्। तादृशोजनःकर्मणाविद्यादिभिश्चसंभृतंलब्धप्रायं भाविनोजन्मनोयद्रूपंतद्वासनावशात्स्वप्नेआत्माप्रकर्षेणपश्यति मिथ्याभूतस्या

पिस्वप्नस्यसूचकतोपपत्तेः । सूचकश्चहिश्रुतेराचक्षतेचतद्वदिति ॥४९॥ एवंजाग्र
त्स्वप्नावस्थेनिरूप्यसुषुप्त्यवस्थांनिरूपयति ॥ तद्वदिति ॥ गगनमंडलेप्रकृष्टपत
नात्बहुतराद्गमनात्श्रांतःश्येनःनयतीतिनीः श्रमपरिहारोपायंविचारयन्सन्
पक्षावाकुंच्यनीडेनिलयनायसंश्लेषाययद्वद्यतते ॥५०॥ एवंजाग्रत्स्वप्नभूमौसंचर

यद्वत्प्रपतनाच्छ्येनःश्रांतोगगनमंडले ॥ आकुंच्यपक्षौयत
तेनीडेनिलयनायनीः॥५०॥एवंजाग्रत्स्वप्नभूमौश्रांतआत्मा
ऽभिसंचरन् ॥ आपीतकरणग्रामःकारणेनैतिचैकताम् ॥५१॥

न्श्रांतआत्माजीवःआपीतोविलीनः करणग्रामइंद्रियवर्गोयस्मिन्नेवंभूतःसन् का
रणेनेश्वरेणसहएकतामेतिप्राप्नोति । यद्यप्यामोक्षंजीवब्रह्मणोरौपाधिकोभेदो
ऽस्त्येव तथाप्यहंकारविलयात्स्वरूपसुखांशोजाग्रत्कालापेक्षयाधिकोभवति। दुः
खंचनास्तीत्येतावन्मात्रेण एकतामेतीत्युक्तम् । एतेन “ सतासौम्यतदासंपन्नो

भवतिप्राज्ञेनसंपरिष्वक्तः" इत्यादिश्रुतयोऽपिविख्याताः ॥ ५१ ॥ नन्वीश्वरेण सहैकतांप्राप्तश्चेत्तर्हिपुनरनुत्थानापत्तिरित्याशंक्याह ॥ नाडीति ॥ विज्ञानात्मा जीवोनाडीमार्गैरिंद्रियाणांवासनाःसंस्कारान्समाकृष्याविद्ययेतिशेषः । सर्वम विद्याकार्यंजाग्रत्स्वप्नरूपंग्रसित्वाविलीयते ॥ ५२ ॥ कुत्रेत्याकांक्षायामाह ॥ ई

नाडीमार्गैरिंद्रियाणामाकृष्यादायवासनाः ॥ सर्वंग्रसित्वाका
र्यंचविज्ञानात्माविलीयते ॥ ५२ ॥ ईश्वराख्येऽव्याकृतेऽथयथा
सुखमयोभवेत् ॥ कृत्स्नप्रपंचविलयस्तथाभवतिचात्मनः ॥५३॥

श्वरेति ॥ ईश्वराख्ये अव्याकृतेमायोपहितचैतन्येविलीयते । अतस्तत्रयानानं तरं यथासुखमयोभवति तथाकृत्स्नप्रपंचविलयोभवति । नायंलिंगभंगरूपः । त स्यामोक्षमवस्थानात् । किंतुसंस्काररूपेणावस्थानमेवविलीयतइत्युच्यते । एव

मेवकार्यब्रह्मणोऽपिदिनावसानेईश्वरेविलयोद्रष्टव्यः ॥ ५३ ॥ कीदृशंतत्सुखमि त्याकांक्षायामाह ॥ योषितइति ॥ काम्यमानायायोषितःसंभोगस्यअंतेमध्यइ त्यर्थः । यथासुखंसर्वेभ्योवैषयिकसुखेभ्योऽधिकंसुखंभवति । तथासुषुप्तावधिकंसु खंभवति । अतएवसआनंदमयःप्रचुरानंदइत्यर्थः । तदानींजीवःअबाह्यः विषय संबंधजनितवृत्तिविशिष्टज्ञानोनभवतीत्यर्थः । नांतरःमोक्षावस्थायामिवनिवृत्तमू

योषितःकाम्यमानायाः संभोगांतेयथासुखम् ॥ सआनंदमयोऽबाह्यो
नांतरःकेवलस्तथा ॥५४॥ प्राज्ञात्मानंसमासाद्यविज्ञानात्मातथैवसः॥

लाचरणोऽपिनेत्यर्थः । निर्वृत्तिकसुखाभिव्यक्तौमोक्षःस्यात् । तस्मात्तत्राप्यहंका रवृत्तिरस्त्येवेतिसिद्धांतः । तदुक्तमाचार्यभगवत्पादैः । "सुप्तिगतःसुखलेशैरभिम नुतेयःसुखीभवामीति । आनंदकोशनामासोऽहंकारःकथंभवेदात्मा" इति ॥ ॥५४॥तदेवाह॥प्राज्ञेति॥प्राज्ञात्मानमीश्वरंसमासाद्यसुषुप्तौप्राप्यापिसःसुषुप्तः

विज्ञानात्माजीवःतथा जाग्रदादौयथातद्वदनपगतभेदइत्यर्थः । तथातिष्ठन्नभि न्नोऽपिसन्सःजीवःदुःखराहित्यसाम्यात्कारणात्मोच्यते । ईश्वरएवेत्युपचर्यत इत्यर्थः ॥ ५५ ॥ ननुसुषुप्तावंतःकरणस्यविलीनत्वात्सुप्तोत्थितस्यसुखमहम स्वाप्समित्यनुसंधानंनस्यादित्याशंक्याह॥अविद्येति॥ अविद्यायाःसूक्ष्मवृत्त्या

विज्ञानात्माकारणात्मातथातिष्ठन्नथापिसः॥ ५५ ॥अवि
द्यासूक्ष्मवृत्त्यानुभवत्येवयथासुखम् ॥तथाहंसुखमस्वाप्सं
नैवकिंचिदवेदिषम् ॥ ५६ ॥ अज्ञानमपिसाक्ष्यादिवृत्तिभि
श्चानुभूतये ॥ इत्येवंप्रत्यभिज्ञापिपश्चात्तस्योपजायते ५७

यथासुखंभवति । तथासुखमहमस्वाप्समितिजीवोऽनुभवत्येव अनुसंधत्तइत्यर्थः ॥ ५६ ॥ ननुनकिंचिदवेदिषमित्यज्ञानानुसंधानमपिकथंतत्राह ॥ अज्ञानमपी ति ॥ नकेवलंसुखमेवानुसंधत्तेकिंतुअज्ञानमपि । साक्ष्यादिवृत्तिभिःस्वापका

लीनाभिरविद्यावृत्तिभिरज्ञानमप्यनुभूयते। अतस्तदनुसंधत्ते नकिंचिदवेदिषमि ति । उक्तंचपंचपादिकायाम् " सुषुप्त्यादौचाहंकारादिविक्षेपःसंस्कारमात्रशेषं स्थित्वापुनरुद्भवति " इति ॥ ५७ ॥ तदेवमवस्थात्रयंनिरूपितम्। इदंचइहलो कपरलोकयोः साधारणमित्याह ॥ जाग्रदिति ॥ देवादीनामप्यवस्थात्रयमस्त्ये

जाग्रत्स्वप्नसुषुप्त्याख्यमेवेहामुत्रलोकयोः ॥ पश्चा
त्कर्मवशादेवविस्फुलिंगाइवानलात् ॥ जायंते
कारणादेवमनोबुध्यादिकानितु ॥ ५८ ॥

वेतिशेषः। अमुत्रलोकोदेवादीनामुपलक्षणार्थः। सुषुप्त्यनंतरंजाग्रत्प्रपंचःपुनरुद्भ वतीतिसदृष्टांतमाह ॥ पश्चादिति ॥ सुषुप्त्यनंतरमित्यर्थः । जाग्रदवस्थादृष्टवशा त्कारणात्जीवाज्ञानादेवसूक्ष्मरूपेणावस्थितानिबुद्ध्यादिकानिपुनर्जायंते । स्थू लाकारेणपरिणमंतीत्यर्थः । तत्रदृष्टांतः। अनलाद्विस्फुलिंगाइव ॥ ५८ ॥

दृष्टांतांतरंच ॥ पयःपूर्णेति ॥ अजात्परमात्मनःसकाशात् । अनेनभेदएवतयोः सूचितः । उभयोरप्युपाधिसत्वात् ॥ ५९ ॥ अध्यायोपक्रमेजीवस्वरूपंकथमिति रामेणपृष्ठंतदुत्तरत्वेनसप्रपंचंतदुक्तातात्पर्यंविशदयति ॥ विज्ञानेति ॥ सःपर मात्मापि एवार्थोऽपि विज्ञानात्माजीवःकारणात्माईश्वरस्तथातथातिष्ठनूरूपद्व

पयःपूर्णघटोयद्वन्निमग्नःसलिलाशये ॥ तैरेवोद्धृतआयातिविज्ञाना त्मातथैत्यजात्॥५९॥विज्ञानात्माकारणात्मातथातिष्ठंस्तथापिसः॥ दृश्यतेसर्वमेष्वेवनष्टेष्वायात्यदृश्यताम् ॥ ६० ॥ एकाकारोऽर्यमातत्त त्कार्येष्वेवंपरः पुमान् ॥ कूटस्थोदृश्यतेतद्वद्गच्छत्यागच्छतीवसः ६१

येनस्थितइत्यर्थः । एषुअज्ञानतत्कार्येषुसत्स्वेवसर्वंजीवेश्वरादिभेदपूर्वकंप्रपंच जातंदृश्यते । अज्ञानादिषुनष्टेषुत्वदृश्यतामायाति ॥ ६० ॥ उक्तमर्थंदृष्टांतेनद्रढ यति ॥ एकेति ॥ एकाकारोऽपिएकोऽप्यर्यमासूर्यःतत्तत्कार्येषुजलादिषूपाधिषुदृ

श्यते । एवंसपरःपुमान्कूटस्थोऽपिनिर्विकारोऽपितद्वदुपाधिवशाद्गच्छत्यागच्छ
तीतिदृश्यते ॥ ६१॥ ननुसर्वैर्विरुद्धधर्माःकथमेकत्रस्वीकार्याइत्याशंक्याह ॥ मो
हेति ॥ मोहमात्रएवांतरायःस्वरूपस्फूर्तिप्रतिबंधकःतस्यभावस्तत्त्वंतस्मात्सर्वं
विरुद्धधर्मादिकंतस्यपरमात्मानउपपद्यते। विरुद्धधर्माणांस्वसमानभेदप्रयोजक

मोहमात्रांतरायत्वात्सर्वंतस्योपपद्यते ॥ देहाद्यतीतआत्मापिस्व
यंज्योतिःस्वभावतः ॥ एवंजीवस्वरूपंतेप्रोक्तंदशरथात्मज॥६२॥
इतिश्रीपद्मपुराणेउपरिभागेशिवगीतासूपनिषत्सुब्रह्मविद्यायांयो
ग०शिवराघवसं०जीवस्वरूपवर्णनंनामदशमोऽध्यायः ॥ १० ॥

त्वंनास्तीतिभावः । तदुक्तम् " कूटस्थमनुपद्रुत्यकरोतिजगदादिकम् ॥ दुर्घटैक
विधायिन्यांमायायांकाचमत्कृतिः॥ मायाख्यायाःकामधेनोर्वत्सौजीवेश्वरावुभौ।
यथेच्छंपिबतांद्वैतंतत्त्वंत्वद्वैतमेवहि " इति ॥ ६२ ॥ इतिशिवगीताटीकायांदशमो

ऽध्यायः ॥ १० ॥ गमनागमनेकथमितिप्रश्नेलिंगोपाधिवशादित्युत्तरंदत्तं तदेव विशदयितुमेकादशोऽध्यायआरभ्यते ॥ देहांतरेति ॥ नृपशार्दूलराजश्रेष्ठ मत्तः मत्सकाशात् अवहितःसावधानः ॥ १ ॥ भुक्तमिति ॥ यतइतिप्रथमांतात्तासिः । भुक्तंपीतंचयतःयदित्यर्थः । तस्यरसात्परिणामविशेषात्स्थूलदेहस्यलिंगस्यच

श्रीभगवानुवाच ॥ देहांतरगतिंतस्यपरलोकगतिंतथा ॥ वक्ष्यामिनृपशार्दूलमत्तःशृणुसमाहितः ॥ १ ॥ भुक्तंपीतंयतस्तत्रतद्रसादामबंधनम् ॥ स्थूलदेहस्यलिंगस्यतेनजीवनधारणम् ॥२॥ व्याधिनाजरयावापिपीड्यतेजाठरोऽनलः ॥ श्लेष्मणातेनभुक्तान्नंपीतंवानपचत्यलम् ॥ ३ ॥

परस्परं आमबंधनंनूतनबंधनंभवतीतिशेषः । तेनदृढबंधनेनजीवस्यप्राणवायोर्धारणंभवति ॥ २ ॥ व्याधिनेति ॥ व्याधिनारोगेणजरयावाप्रेरितेनश्लेष्मणा जाठरोजठरसंबंधीअनलःपीड्यते । तेनकारणेनकुंठितशक्तिरग्निर्भुक्तान्नंपीतंवा

अलंपर्याप्तंनपचति ॥ ३ ॥ भुक्तेति ॥ भुक्तपीतयोरसस्यपरिणामविशेषस्याभा वात् तदाधातवस्त्वगसृङ्मांसादयःशुष्यंति । धातुवृद्धिप्रकारमाह । भुक्तपीतयोः प्रदीप्तेनजाठराग्निनापाचितयोरसेनवायवः प्राणादयोदेहेधातून्लिंपंतिउपचयं प्रापयंतीतियावत् अत्रधातुवायुप्रकरणवशाद्यथायथंतेषांतेषांचाध्याहारः ॥ ४ ॥

भुक्तपीतरसाभावात्तदाशुष्यंतिधातवः ॥ भु
क्तपीतरसेनैवदेहेलिंपंतिवायवः ॥ ४ ॥ समी
करोतियत्तस्मात्समानोवायुरुच्यते ॥ त
दानींतद्रसाभावादामबंधनहानितः ॥ ५ ॥

वायुविशेषस्तुलिप्तान्धातून्समीकरोति । यद्यस्मात्तस्मात्समानोवायुरुच्यते । एषातारुण्यावस्थायाः स्थितिरुक्ता । इदानींजरसिजठरानलमांद्यकालेतुतेषांभु क्तपीतानांरसस्याभावात् आमबंधनस्यपूर्वोक्तस्यहानितःलिंगंतनोर्व्रजेदित्यने

नवक्ष्यमाणेनसंबध्यते ॥ ५ ॥ परिपक्वेति॥ यथाकूष्मांडादिफलंगौरवतः गुरुत्वा त्स्वयमेवपतति । तथालिंगंतनोः स्थूलदेहाद्व्रजेत्। विश्लेषंप्राप्नुयादित्यर्थः॥ ६ ॥ तत्तदिति ॥ हृषीकाणामिंद्रियाणांवासनाः । तथाध्यात्मिकानिजीवात्मन्यध्य स्तानिबुद्धिप्रभृतीनितथाधिभौतिकानिभाविदेहारंभकाणिसोमादिपयःप्रभृतीनि

परिपक्वरसत्वेनयथागौरवतःफलम् ॥ स्वयमेवपतत्याशुतथा
लिंगंतनोर्व्रजेत् ॥ ६ ॥ तत्तत्स्थानादपाकृष्यहृषीकाणांच
वासनाः॥ आध्यात्मिकाधिभूतानिहृत्पद्मेचैकतांगतः ॥ ७ ॥

सूक्ष्मरूपाणि इत्थंत्रितयमप्याकृष्यहृत्पद्मेएकतांगतः पांसूदकवत्पिंडितस्वरू पएषप्राणवायुः अध्वगःपांथःसन् इतरैर्नवभिर्वायुभिःसंयुक्तःसन् ऊर्ध्वोच्छ्वा सीभवति । तथातेनप्राणवायुनाएकतांगतस्तादात्म्यापन्नोजीवोऽपिउपसर्पती तिवक्ष्यमाणेनसंबध्यते। अत्रभाविदेहारंभकीभूतैःसहोत्क्रमणम् श्रुतिराह “पं

चम्याहूतावायःपुरुषवचसोभवतीति तदनंतरप्रतिपत्तौ रंहतिसंपरिष्वक्तः" प्रश्ननिरूपणाभ्यामित्यधिकरणेच निर्णीतंततएवबोध्यम् ॥ ७ ॥ ८॥ कस्मान्मार्गादुपसर्पतीत्याकांक्षायामाह ॥ चक्षुषोरिति ॥ विद्याकर्मभ्यांसमायुक्तः वासनाभिश्चपूर्वप्रज्ञानुसारिणीभिःसंयुतः। तथाचश्रुतिः। "तंविद्याकर्मणीसम

ततोऽध्वगःप्राणवायुःसंयुक्तोनववायुभिः॥ऊर्ध्वोच्छ्वासीभवत्येषतथातेनैकतांगतः ॥ ८ ॥ चक्षुषोर्वापिमूर्ध्नोवानाडीमार्गंसमाश्रितः ॥ विद्याकर्मसमायुक्तोवासनाभिश्चसंयुतः॥ प्राज्ञात्मानंसमाश्रित्यविज्ञानात्मोपसर्पति ॥ ९ ॥

न्वारभेतेपूर्वप्रज्ञाच" इति। प्रज्ञात्मानंसमाश्रित्यतत्प्रेरितःसन्नित्यर्थः। तथाच श्रुतिः। "प्राज्ञेनात्मनान्वारूढउत्सर्जन्याति" इति। उत्सर्जन्हिक्कादिशब्दंकुर्वन् उपसर्पति औपाधिकगमनभाग्भवति। नहिमुख्यंगमनंपूर्णस्यसंभवति॥९॥

औपाधिकगमनमेवदृष्टांतेनद्रढयति ॥ यथेति ॥ सर्वत्रसघटःखपूर्णएवसर्वोघ टावच्छिन्नाकाशइतिव्यवह्रियते। तत्रघटआनीतेघटाकाशोऽयमितिव्यवह्रियतेत द्वत्परात्मनोजीवस्यलिंगशरीरंजीवपूर्णमेवयाति। यतोदेहाद्यातितत्रनजीवत्वव्य

यथाकुंभोनीयमानोदेशाद्देशांतरंप्रति ॥ खपूर्णएवसर्वत्रसआ
काशोऽपितत्रतु ॥ १० ॥ घटाकाशाख्यतांयातितद्वल्लिंगंपरात्म
नः ॥ ११ ॥ पुनर्देहांतरंयातियथाकर्मानुसारतः ॥ आमोक्षात्संच
रत्येवंमत्स्यःकूलद्वयंयथा ॥ १२ ॥ पापभोगायचेद्गच्छेद्यम
दूतैरधिष्ठितः ॥ यातनादेहमाश्रित्यनरकानेवकेवलम् ॥ १३ ॥

वहारः। यस्मिन्देहेतिष्ठतितत्रैवजीवइतिव्यवहारइतिभावः ॥ १० ॥ ११ ॥ पुन रिति ॥ आमोक्षात्मोक्षपर्यंतमित्यर्थः। कूलद्वयंतीरद्वयम् ॥ १२ ॥ पापेति ॥ केव लंपापभोगायचेद्गच्छेत्तर्हिनरकानेवगच्छेत्। उभयभोगायचेन्मनुष्यलोकंगच्छे

दितिभावः । "उभाभ्यांमनुष्यलोकः" इतिश्रुतेः ॥ १३ ॥ इष्टेति ॥ इष्टानिय ज्ञान्पूर्तानितडागारामादीन् यःसर्वदानुतिष्ठति । एषसुकृतीयामंयमसंबंधिनंदूतमाश्रित्यतेननीयमानःसन्नित्यर्थः । बर्हिषःश्रौतस्मार्ताग्नेश्चहेतुभूतादित्यर्थः । यागस्याग्निसाध्यत्वात्सोऽपितत्रपरंपरयाप्रयोजकइतिभावः । पितृलोकंव्रजति ।

इष्टापूर्तानिकर्माणियोऽनुतिष्ठतिसर्वदा ॥ पितृलोकंव्रजत्येषयाममाश्रित्यबर्हिषः ॥१४॥ धूमंरात्रिंगतःकृष्णपक्षंतस्माच्चदक्षिणम् ॥ अयनंचततोलोकंपितॄणांचततःपरम् ॥ चंद्रलोकेदिव्यदेहंप्राप्यभुंक्तेपरांश्रियम् ॥ १५ ॥

"कर्मणापितृलोकः" इतिश्रुतेः । "बर्हिःशुष्माकृष्णवर्त्मेत्यमरः" । अत्र बर्हिरितिपृथक्पदं बर्हिर्मुखाइतिदर्शनादितिक्षीरस्वामी ॥१४॥ धूममिति ॥ "अथ यइमेग्रामइष्टापूर्तेदत्तमित्युपासतेतेधूममभिसंभवंति" इत्युपक्रम्य "आकाशा

श्चंद्रमसम्" इत्यंतेनधूमादिःपितृयाणःपंथाइष्टादिकारिणांश्रुतावुक्तः। तदेत दाह प्रथमंधूमंततोरात्रिंततः कृष्णपक्षंतस्माद्दक्षिणायनंततः पितॄणांलोकंततश्चं द्रलोकंगतःसन्दिव्यदेहंप्राप्यचंद्रसमानोऽसाविष्टादिकारीपरांश्रियंभुंक्ते। याव त्कर्मफलंतत्रवसेत्। धूमोरात्रिःकृष्णपक्षोदक्षिणायनंचेत्याद्या आतिवाहिकादेव तानिर्दिश्यंते ताएनमिष्टादिकारिणंचंद्रलोकंप्रापयंति। तदुक्तंगीतायाम्। "धूमो रात्रिस्तथाकृष्णःषण्मासादक्षिणायनम्॥ तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्त ते॥ अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरायणम्॥ तत्रप्रयातागच्छंतिब्रह्मब्रह्मवि दोजनाः" इति। तथाचयदाकदावाम्तमुपासकमग्न्यादयआतिवाहिकाब्रह्मलो कंप्रापयंतीति तथेष्टादिकारिणंयदाकदावाम्तमपिधूमादयआतिवाहिकाश्चंद्रम संप्रापयंतीतिनिष्कर्षः। आतिवाहिकास्तल्लिंगात्। अतश्चायनेऽपिदक्षिणइति न्यायात्। यथेतमितियथागतं उपलक्षणंचेदम्। येनक्रमेणचंद्रलोकंगतस्तद्विप

रीतक्रमेणेमंलोकमायातीत्यर्थः। "क्षीणेपुण्येमर्त्यलोकंविशंति" इतिस्मृतेः॥१५॥
॥ १६ ॥ वपुर्विहायेति॥ चंद्रलोकेभोगशरीरंविहायजीवत्वंलिंगशरीरावच्छिन्न
त्वंप्राप्यअवरोहति। अवरोहक्रममाह॥ आकाशमेतिसइत्यादिना ॥ आकाशं

तत्रचंद्रसमानोऽसौयावत्कर्मफलंवसेत् ॥ तथैवकर्म
शेषेणयथेतंपुनराव्रजेत्॥ १६ ॥ वपुर्विहायजीवत्वमा
साद्याकाशमेतिसः ॥ आकाशाद्वायुमागत्यवायोरंभो
व्रजत्यथ॥ १७॥ अद्भ्योमेघंसमासाद्यततोवृष्टिर्भवेद
सौ॥ततोधान्यानिभक्ष्याणिजायतेकर्मचोदितः॥१८॥

आकाशत्वमित्यादिभावप्रधानोनिर्देशः॥१७॥ ततःक्रमेणासौजीवोवृष्टिर्भवेत्त
त्राकाशादिसाम्यमभिप्रेतंनतुतद्भेदः। "संभाव्यापत्तिरुपपत्तेः" इतिन्यायात्।
ततोधान्यानिततोभक्ष्याण्यन्नानीत्यर्थः। सःजायतेकर्मणाप्रारब्धेनचोदितःसन्

॥ १८ ॥ इयंचधूमादिमार्गेणगतानांपुनरावृत्तिर्ननियतासर्वेषांकिंतुप्राचुर्येणेत्याह ॥ योनिमिति ॥ मुक्तिमिति ॥ अन्येतूत्तमाधिकारिणः यथाकर्मचित्तशुद्धिमुद्दिश्याचरितकर्मानुसारेणेत्यर्थः । यथाश्रुतंचंद्रलोकेकृतश्रवणादिसाधनानुसारेणेत्यर्थः । मुक्तिंसंयांति । मुक्तिमितिक्रममुक्तिमित्यर्थः । तदुपर्यपिबादरायणःसंभ

योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः॥ मुक्तिमन्येतुसंयांति यथाकर्मयथाश्रुतम् ॥ १९ ॥ ततोऽन्नत्वंसमासाद्यपितृभ्यां भुज्यतेपरम् ॥ ततःशुक्रंरजश्चैवभूत्वागर्भोऽभिजायते२०

वादित्यधिकरणे " स्वर्गलोकादावपिश्रवणादिसाधनेनमोक्षोभवति " इतिनिर्णयात् । तथाचश्रुतिः । "तद्योदेवानांप्रत्यबुध्यतसतदभवत्तथर्षीणांतथामनुष्याणाम्" इति ॥१९॥ ततोऽन्नत्वमिति ॥ अन्नत्वंसमासाद्यस्थितोजीवःपितृभ्यांपुनः स्थूलदेहतादात्म्याध्यासायभुज्यते । ततःपितरिशुक्ररूपेणमातरिरजोरूपेण

स्थित्वास्त्रीपुरुषसंयोगेसतिस्त्रियांगर्भोऽभिजायते । ततःकर्मानुसारेणेतिस्पष्टम्
॥२०॥२१॥ मुक्तिंतस्यवदामितइत्युक्तंतदेवोपपादयति ॥ यस्त्वित्यादिना॥ श
मदमतितिक्षासमाधानश्रद्धायुक्तःसन्सदाविद्यायांरतःस्ववर्णाश्रमकर्माणीश्वरा
र्पणधियाकुर्वाणश्चेत्यादिपदात्संग्रहः। सदेवयानेनपथा "तेऽर्चिषमभिसंभवंत्य

ततःकर्मानुसारेणभवेत्स्त्रीपुंनपुंसकः॥ एवंजीवगतिःप्रोक्तामुक्तिंतस्य
वदामिते ॥ २१ ॥ यस्तुशांत्यादियुक्तःसन्सदाविद्यारतोभवेत् ॥ स
यातिदेवयानेनब्रह्मलोकावधिंनरः ॥ २२ ॥ अर्चिर्भूत्वादिनंप्राप्यशु
क्लपक्षमथोव्रजेत् ॥ उत्तरायणमासाद्यसंवत्सरमथोव्रजेत् ॥ २३ ॥

र्चिषोहरहआपूर्यमाणपक्षं" इत्याद्युपक्रम्य "एषदेवपथोब्रह्मपथएतेनप्रतिपाद्य
मानाइमंमानवमावर्तंनावर्तंते" इतिश्रुत्युक्तेनब्रह्मलोकएवावधिस्तंयाति । नरो
ऽधिकारीजीवः॥२२॥ देवयानंपंथानंश्रुत्युक्तंश्लोकतःसंगृह्णाति ॥ अर्चिरित्या

दिना ॥ दिव्यःश्रुत्युक्तोमानवःपुरुषइहविद्युल्लोकएतितत्रागत्यतमुपासकंगृहीत्वाब्रह्मलोकंगमयंतीतिशेषः। तत्रैवतस्योपासकस्यश्रवणादिज्ञानोदयेब्रह्मणासहमुक्तिःनतुपुनरावृत्तिः। "एतेनप्रतिपाद्यमानाइमंमानवमावर्तंनावर्तंते"इतिश्रु

आदित्यचंद्रलोकौतुविद्युल्लोकमतः परम् ॥ अथ
दिव्यःपुमान्कश्चिद्ब्रह्मलोकादिहैतिसः ॥ २४ ॥
दिव्येवपुषिसंधायजीवमेवंनयत्यसौ ॥ २५ ॥
ब्रह्मलोकेदिव्यदेहेभुक्त्वाभोगान्यथेप्सितान् ॥
तत्रोषित्वाचिरंकालंब्रह्मणासहमुच्यते ॥ २६ ॥

तेः। " ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेकृतात्मानःप्रविशंतिपरंपदं"इतिस्मृतेश्च। अत्रचसंवत्सरादित्ययोर्मध्येदेवलोकवायुलोकौविद्युदनंतरंवरुणेंद्रप्रजापतिलोकाःश्रुत्यंतरोक्ताउपसंहर्तव्याइतिदिक् ॥ २३ ॥२४॥ २५॥२६॥

॥ २७॥ २८ ॥ इदानींपापभोगायचेद्गच्छेद्यमदूतैरधिष्ठितइत्यादिपूर्वोक्तरीत्या नरकंगतस्यपश्चाद्भाविनीमवस्थामाह॥भुक्त्वाचेति॥ ततोबहुभिर्जन्मसहस्रैःकेनचित्पुण्यपरिपाकेनज्ञानीभूत्वामुक्तोभवतीतिभावः । मध्वास्तु "नसपुनराव

शुद्धब्रह्मरतोयस्तुनसयात्येवकुत्रचित् ॥ तस्यप्राणाविलीयंतेजले
सैंधवखिल्यवत् ॥ २७॥ स्वप्नदृष्टायथासृष्टिः प्रबुद्धस्यविलीयते॥
ब्रह्मज्ञानवतस्तद्वद्विलीयंतेतदैवते ॥ विद्याकर्मविहीनोयस्तृतीयं
स्थानमेतिसः ॥२८॥ भुक्त्वाचनरकान्घोरान्महारौरवरौरवान् ॥
पश्चात्प्राक्तनशेषेणक्षुद्रजंतुर्भवेदसौ ॥ २९ ॥ यूकामशकदंशादिज
न्मासौलभतेभुवि॥एवंजीवगतिःप्रोक्ताकिमन्यच्छ्रोतुमिच्छसि३०

र्तते" इतिश्रुतिर्मुक्तानामंधतमोगानांचसमैवेतिजल्पंतितेषांगौतमादिसप्तानांचतुरादिश्रुतिब्रह्मतर्कमूलरामायणादिस्मृतिकल्पकानांदुर्मतंवैदिकैः कौतुकायापिना

वलोकनीयमित्यन्यत्रविस्तरः ॥२९॥३०॥ उपासनायाइष्टापूर्तादिकर्मणश्चफलं यथाक्रमंब्रह्मलोकचंद्रलोकप्राप्तिरूपमुक्तं गंधर्वसूर्येंद्रादिलोकप्राप्तिस्तत्किमिदमुपासनाफलंविद्याफलंवेतिसंदिहानःपृच्छति ॥ भगवन्निति ॥ ज्ञानमुपासा

रामउवाच ॥ भगवन्यत्त्वयाप्रोक्तंफलंतुज्ञानकर्मणोः ॥ ब्रह्मलोके चंद्रलोकेभुंक्तेभोगानितिप्रभो ॥ ३१ ॥ गंधर्वादिषुलोकेषुकथंभोगःसमीरितः ॥ देवत्वंप्राप्नुयात्कश्चित्कश्चिदिंद्रत्वमेवच ॥ ३२ ॥ एतत्कर्मफलंवास्तुविद्याफलमथापिवा॥ तद्ब्रूहिगिरिजाकांततत्रमे संशयोमहान् ॥ ३३ ॥ श्रीभगवानुवाच ॥ तद्विद्याकर्मणोरेवानुसारेणफलंभवेत् ॥ युवाचसुंदरःशूरोनीरोगोबलवान्भवेत् ॥३४॥

कर्मइष्टापूर्तादि तयोःफलंतूक्तम्॥३१॥३२॥ एतत्कर्मफलंवास्तुअथवा विद्यायाउपासनायाःफलम् ॥ ३३ ॥ उत्तरमाह ॥ तदिति॥ विद्याकर्मणोःपूर्वोक्तयोरेवता

रतम्यानुसारेणफलतारतम्यंस्यात्। तदेवमानुषाद्यानंदानांतारतम्यमाह॥ युवा चेत्यादिना ॥ ३४॥ ३५॥ मनुष्यइति॥ तपसायुक्तःसनूगंधर्वोजायते । अस्यगंधर्वतांप्राप्तस्यानंदःपूर्वोक्तमानुषानंदाच्छतगुणोऽधिकइतिसंबंधः। उक्तगंधर्वानंदाद्देवगंधर्वाणामानंदःशतगुणः ॥ ३६ ॥ एवमिति ॥ वक्ष्यमाणानांपित्रा

सप्तद्वीपांवसुमतींभुंक्तेनिष्कंटकंयदि॥ सप्रोक्तोमानुषानंदस्तस्मा च्छतगुणोमतः॥ ३५॥ मनुष्यस्तपसायुक्तोगंधर्वोजायतेऽस्यतु॥ तस्माच्छतगुणोदेवगंधर्वाणांनसंशयः॥ ३६॥ एवंशतगुणानंदउ त्तरोत्तरतोभवेत्॥ पितृणांचिरलोकानामाजानसुरसंपदाम्॥३७॥

दीनामप्यानंदःक्रमेणोत्तरोत्तरंशतगुणोबोद्धव्यइत्यर्थः । षष्ठ्यर्थेतसिः । पितृणांचिरलोकानांतथाजानदेवानांकर्मणादेवत्वंप्राप्तानाम्। तथादेवानांअथेंद्रस्यबृहस्पतेस्तद्वत्प्रजापतेःब्रह्मणश्च । पुरस्तात्पूर्वस्मादुत्तरोत्तरंशतगुणइतिसर्वत्रयो

जनीयम् ॥ ३७ ॥ ३८ ॥ ज्ञानाधिक्यादितिज्ञानशब्दःकर्मणोऽप्युपलक्षकः। उपासनायाःकर्मणश्चतारतम्यात्स्वर्गेसुखतारतम्यमित्यर्थः। अन्यत्सुखंतारतम्यंप्रतिकारणंनास्तीत्यर्थः। "इदानींश्रुतौप्रतिपर्यायं" श्रोत्रियस्यचाकामहतस्य इत्याम्नातंतस्याशयंसंगृण्हाति। "श्रोत्रियच्छंदोऽधीते" इतिनिपातनात्साधुः।

देवतानामथेंद्रस्यगुरोस्तद्वत्प्रजापतेः॥ ब्रह्मणश्चैवमानंदाःपुरस्ताद्गुत्तरोत्तरम्॥३८॥ज्ञानाधिक्यात्सुखाधिक्यंनान्यदस्तिसुरालये॥ श्रोत्रियोऽवृजिनोऽकामहतोयश्चद्विजोभवेत्॥३९॥ तस्याप्येवंसमाख्याता आनंदाश्चोत्तरोत्तरम्॥आत्मज्ञानात्परंनास्तितस्माद्दशरथात्मज४०

वेदपारगइत्यर्थः। अवृजिनोनिष्पापःअकामहतोनिष्कामः एवंभूतोयोद्विजोभवेत्। द्विजग्रहणंब्रह्मक्षत्रविशांपरिग्रहार्थम् ॥ ३९ ॥ तस्यापीति ॥ एवंभूतोय आत्मज्ञानीद्विजस्तस्यापि। अपिःसमुच्चये। पूर्वोक्ताःसर्वेआनंदाएवंयुगपत्प्राप्तुं

भवंति। "सोऽश्नुतेसर्वान्कामान्ह" इतिश्रुतेः। "आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रविशंतियद्वत्। तद्वत्कामायंप्रविशंतिसर्वे" इतिस्मृतेश्च। यस्मादेवंतस्मात्आत्मज्ञानात्परमुत्कृष्टंनास्ति "नान्यःपंथाअयनायविद्यते। ज्ञानादेवतुकैवल्यं" इत्यादिश्रुतेः॥ ४०॥ ज्ञानिप्रशंसामाह॥ ब्राह्मणइति॥ ब्राह्मणो

ब्राह्मणःकर्मभिर्नैववर्धतेनैवहीयते॥ नलभ्यःपातकेनैवकर्म
णाज्ञानवान्यदि॥४१॥ तस्मात्सर्वाधिकोविप्रोज्ञानवानेव
जायते॥ ज्ञात्वायःकुरुतेकर्मतस्याक्षय्यफलंभवेत्॥ ४२॥

ब्रह्मवित्विधिनिषेधाववृद्धिक्षयकावेवेतिभावः। यद्येवंविधोज्ञानीयदिस्यात्सःपातकेनकर्मणानैवलभ्यःप्राप्यः। पुण्यपुंजैरेवप्राप्यइतिभावः॥४१॥ यस्मादेवंतस्माद्योज्ञानवान्विप्रःसएवसर्वाधिकोभवतीत्यर्थः। "ज्ञानीत्वात्मैवमेमतम्" इतिस्मृतेः। तस्यसेवायांफलमाह॥ ज्ञात्वेति॥ यःसुकृतीज्ञानिनंज्ञात्वातस्यकर्म

सेवांकुरुतेतस्यसुकृतिनःअक्षय्यंफलंभवेत्। परंपरयामोक्षपर्यवसायि स्यादिति भावः॥ ४२ ॥ यत्फलमितिस्पष्टम्॥ ४३ ॥ ज्ञानवंतमिति ॥ द्विष्यतेद्वेष्टिसः शुष्यमाणःक्षयरोगीसन्म्रियते। यस्मात्ज्ञानीईश्वरएवतस्मात्। "प्रियोहिज्ञा

यत्फलंलभतेमर्त्यःकोटिब्राह्मणभोजनैः ॥ तत्फलंसमवाप्नोतिज्ञानि नंयस्तुभोजयेत्॥ ४३॥ ज्ञानवंतंद्विजंयस्तुद्विष्यतेचनराधमः ॥ सशु ष्यमाणोम्रियतेयस्मादीश्वरएवसः॥ ४४॥ उपासकोनयात्येवयस्मा त्पुनरधोगतिम्॥ उपासनरतोभूत्वातस्मादास्वसुखीनृप ॥ ४५ ॥

निनोऽत्यर्थमहंसचममप्रियः" इतिस्मृतेः। ममतस्यचभेदोनस्वात्मत्वेन किं तुलोकदृष्ट्यैवेतितदर्थः। तदेवमधिगतपरमार्थःकृतकृत्यएवेतिव्यवस्थापितम् ॥ ४४ ॥ निर्गुणब्रह्मचिंतनमसुकरंचेन्मन्यसेतर्हिममसगुणस्योपासनंकुर्वित्याह ॥ उपासकइति॥ "कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति" इतिस्मृतेः। आ

स्ववर्तस्वसुखीसंसारभयरहितः ॥ ४५ ॥ इतिश्रीलक्ष्मीनरहरिसूनुहरिपंडितवि रचितायांशिवगीताटीकायांबालानंदिन्यामेकादशोऽध्यायः ॥ ११ ॥ पूर्वाध्यायां तेउपासकोऽर्चिरादिमार्गेणोर्ध्वगतिमेवगच्छतिततोमुक्तिम्। अधोगतिंपुनर्नगच्छ

इतिश्रीपद्मपुराणेशिवगीतासूपनिषत्सुब्रह्मविद्यायांशिवरा घवसंवादेएकादशोऽध्यायः ॥ ११ ॥ श्रीरामउवाच ॥ भग वन्देवदेवेशनमस्तेऽस्तुमहेश्वर ॥ उपासनविधिंब्रूहिदेशं कालंतुतस्यतु ॥ १ ॥ ईश्वरउवाच ॥ शृणुरामप्रवक्ष्यामिदेश कालमुपासनम् ॥ मदंशेनपरिच्छिन्नादेहाःसर्वदिवौकसाम् २

तितस्माच्वमुपासनरतोभवेत्युक्तंतत्रोपासाविधिंजिज्ञासूरामःपृच्छति ॥ भगव न्निति ॥ उपासनस्यविधिमनुष्ठानप्रकारं तुपुनःदेशकालयोःसमाहारःदेशकालं तुअपि तदपीत्यर्थः ब्रूहि ॥ १ ॥ शृण्विति ॥ उपासनविधिमित्यर्थः। सर्वदिवौक

सांदेहाःमदंशेनाहंकारेणपरिच्छिन्नाःपृथक्कृताः । यद्वामदंशेनप्रतिबिंबचैतन्ये नोपलक्षिताःअतएवपरिच्छिन्नाः तत्तदंतःकरणप्रतिबिंबितचैतन्यभेदाद्भिन्नानतु परमार्थतइतिभावः ॥२॥ ततःकिंतत्राह ॥ येत्विति ॥ येभक्ताअन्यदेवान्यजंतेते ऽपिमामेवयजंति ॥ किंतुअविधिपूर्वकंअहमेवसर्वांतर्यामीफलप्रदइतिमत्स्वरूप

येत्वन्यदेवताभक्तायजंतेश्रद्धयान्विताः ॥ तेऽपिमामेवराजेंद्रयजं
त्यविधिपूर्वकम् ॥ ३ ॥ यस्मात्सर्वमिदंविश्वंमत्तोनव्यतिरिच्यते ॥
सर्वक्रियाणांभोक्ताहंसर्वस्याहंफलप्रदः ॥ ४ ॥ येनाकारेणयेमर्त्या
मामेवैकमुपासते ॥ तेनाकारेणतेभ्योऽहंप्रसन्नोवांछितंददे ॥ ५ ॥

मज्ञात्वेत्यर्थः । अतएवफलाल्पतेतिभावः । “ अंतवत्तुफलंतेषांतद्भवत्यल्पमेधसा म् ” इतिस्मृतेः ॥३ ॥ यस्मात्कारणान्मत्तःमत्सकाशान्नव्यतिरिच्यते । तस्मादह मेवफलप्रदः ॥ ४ ॥ येनेति ॥ उक्तलक्षणेनविष्ण्वाकारेणशिवाकारेणगणेशसूर्या

द्याकारेणवा एकमेवमांयउपासतेतेभ्यस्तेनैवाकारेणवांछितंददेप्रयच्छामिप्रसन्नः
सन् ॥ ५ ॥ विधिनेति ॥ विधिनासर्वांतर्यामिदृष्ट्याअविधिनातत्तद्देवतादृष्ट्या
वापि ॥ अत्रविधिशब्दस्यायमेवार्थः । यजंत्यविधिपूर्वकमित्युक्तत्वात् ॥ ६ ॥ भ
क्तेर्माहात्म्यमाह । अपिचेदिति ॥ पूर्वंसुतरांदुराचारोऽपिपश्चात्तापेनतप्तःसन्

विधिनाऽविधिनावापिभक्त्यायेमामुपासते ॥ तेभ्यःफलंप्रयच्छामि
प्रसन्नोऽहंनसंशयः ॥ ६ ॥ अपिचेत्सुदुराचारोभजतेमामनन्यभाक् ॥
साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः ॥ ७ ॥ स्वजीवत्वेनयोवेत्ति
मामेवैकमनन्यधीः ॥ तंनपश्यंतिपापानिब्रह्महत्यादिकान्यपि ॥ ८ ॥

मांभजते । अनन्यभाक्एकनिष्ठःसःसाधुरेवपुण्यवानेवमंतव्यः । यतःकारणा
त्सःसम्यग्व्यवसितउत्तमनिश्चयवान्जातइत्यर्थः ॥ ७ ॥ स्वजीवत्वेनेति ॥ त्व
मेवाहंत्वत्प्रतिबिंबत्वादितिमामेवैकंपरिच्छेदत्रयशून्यंयोवेत्तिजानाति । यएवंवे

दतमेवभजकामितिवार्थः । यद्वाशोधितत्वंपदार्थाभेदेनशोधिततत्पदार्थंयोध्यायतो ति । ब्रह्महत्यादिकान्यपिपापानितंज्ञानसंपन्नंनपश्यंति द्रष्टुमसमर्थानियदातदा तत्कृतोलेपःक्वेतिभावः ॥ " ज्ञानाग्निःसर्वकर्माणि भस्मसात्कुरुतेतथा " इति स्मृतेः ॥ ८ ॥ उपासेति ॥ तत्रब्रह्मसाक्षात्कारेतदर्थमितियावत् । " निमित्ता

उपासाविधयस्तत्रचत्वारःपरिकीर्तिताः॥ संपदारोपसंवर्गा
ध्यासाइतिमनीषिभिः ॥ ९ ॥ अल्पस्यचाधिकत्वेनगुणयो
गाद्विचिंतनम् ॥ अनंतंवैमनइतिसंपद्विधिरुदीरितः ॥ १०॥

त्कर्मयोगे " इतिसप्तमी । उपासाविधयःप्रकाराइत्यर्थः । चत्वारःमनीषिभिःप रिकीर्तिताः वर्णिताः । संपत् आरोपः संवर्गःअध्यासइत्युपासनाश्चतुर्विधाइ तिनिष्कर्षः ॥ ९ ॥ अल्पस्येति ॥ अल्पस्यपरिच्छिन्नस्यमनसःअनंतवृत्तिरूप गुणयोगादधिकत्वेसादृश्येन अनंताविश्वेदेवाइतियच्चिंतनमसौसंपद्विधिः । त

थाचप्रतीकोपासनाद्विविधा। संपदध्यासश्चेति। तत्रारोप्यप्रधानासंपत्। यथा सगुणमूर्तिचिंतनम्। अधिष्ठानप्रधानोऽध्यासः। अधिष्ठानमुद्दिश्यआरोपित स्यापिध्यानम्। यथासगुणचिंतनेऽपिनिर्गुणब्रह्मानुसंधानम्॥ १०॥ विधावि ति। विधीयतेप्रधानविधिनेतिविधिः अंगमित्यर्थः। तस्मिन्नारोप्य याउपा

विधावारोप्ययोपासासारोपःपरिकीर्तितः॥यद्वदोंकारमुद्गी
थमुपासीतेत्युदाहृतः॥११॥आरोपोबुद्धिपूर्वेणयउपासावि
धिश्चसः॥ योषित्यग्निमतिर्यत्तदध्यासःसउदाहृतः॥ १२॥

सनासाआरोपः। अंगावबद्धाध्यासइतियावत्। उद्गीथसाम्नःप्रथमभक्तिः। "ॐ कारमुद्गीथमुपासीत" इति॥११॥ आरोपइति॥ बुद्धिपूर्वेणबुद्धिपूर्वकंज्ञात्वेतिया वत्। यआरोपःसोऽसौउपासाविधिरध्यासइत्युदाहृतः। यथायोषितिअग्निमतिः "योषावावगौतमाग्निः" इतिश्रुत्युक्तोऽर्थः। यद्यपिप्रागुक्तांगावबद्धोपासनाप्य

ध्यासएवांतर्भवतितथापिकिंचिद्भेदाद्भेदः ॥ १२ ॥ क्रियायोगेनेति ॥ क्रियायोगेनसंवृक्तेभूतानीतिसंवर्गः । सर्वभूतवशीकरणधुरीणइत्यर्थः । इयंसंवर्गोपासा । तत्रदृष्टांतः । प्रलयेसंवर्तनामावायुर्यथाभूतान्यवसीदतिअवसादयतिस्वाधीनानि करोतीति । तद्वदयंसंवर्गइतिभावः ॥१३॥ उपसंगम्येति ॥ बुद्ध्यागुरूपल

क्रियायोगेनचोपासाविधिःसंवर्गउच्यते ॥ संवर्तवायुःप्रलयेभूतान्येकोऽवसीदति ॥ १३ ॥ उपसंगम्यबुद्ध्यायदासनं देवतात्मना ॥ तदुपासनमंतःस्यात्तद्बहिःसंपदादयः ॥ १४ ॥

ब्धेनज्ञानेन देवतायाःस्वस्यचाभेदरूपेण उपसंगम्यदेवतासमीपंगत्वा यदासनं अवस्थानंपूजार्थमितिशेषः । तत् अंतःअंतरंगभूतमुपासनंबोद्धव्यम् । संपदादयस्तुप्रागुक्तास्ततोबाहिर्बहिरंगभूताः । ब्रह्मज्ञानपक्षेतुबुद्ध्याश्रवणादिजन्यया देवतात्मनोपसंगम्यब्रह्माहमस्मीतिविषयीकृत्ययदासनंध्यानं तदंतरंगमुपासन

मितियोजनीयम् ॥ १४ ॥ कियत्कालमुपासनंविधेयमित्याकांक्षायांतदवधिमाह ॥ ज्ञानेति॥ ज्ञानांतरेणविजातीयज्ञानेन शिवध्यानकालेकामिनीध्यानरूपेणेत्यर्थः । अनंतरितानिमध्येविच्छिन्नानिनभवंतीत्येवंरूपाणि अव्यवहितानीतियावत् । यानिसजातीयज्ञानानितेषांसंततेः । निदिध्यासनस्येत्यर्थः । उपासनंभाव

ज्ञानांतरानंतरितसजातिज्ञानसंततेः ॥ संपन्नदेवतात्मत्वमुपासनमुदीरितम् ॥ १५ ॥ संपदादिषुबाह्येषुदृढबुद्धिरुपासनम् ॥ कर्मकालेतदंगेषुदृष्टिमात्रमुपासनम् ॥ उपासनमितिप्रोक्तंतदंगानिब्रुवेशृणु ॥ १६ ॥

प्रधानोनिर्देशः उपासनत्वम् । संपन्नःस्वाभेदेनसक्षात्कृतोदेवतात्मायेनतथात्वंउदीरितंकथितम् । साक्षात्कारपर्यंतंनिदिध्यासनंकर्तव्यम् । "आवृत्तिरसकृदुपदेशात् " इत्यधिकरणेस्पष्टमेतत् ॥ १५ ॥ संपदादिष्विति ॥ तत्रबुद्धेर्दार्ढ्यमेवावधिरित्यर्थः । सगुणनिर्गुणोभयविषयिणीरुपासनाःप्रागुक्ताउपसंहरति ॥ उपा

सनमिति ॥ अवध्युपसंहाररूपविषयभेदादुपासनशब्दावृत्तिः । तदंगानिउपासनांगानि ॥ १६ ॥ उपासनविधिंब्रूहिदेशकालंखितिरामेणपृष्टंतत्रोपासनंसविस्तरमुक्तम् । इदानींउपासनायोग्यंदेशमाह ॥ तीर्थेति ॥ शुद्धचित्तस्यकिंतीर्थेनेतिभावः । तर्हिकुत्रोपासनंविधेयंतदाह ॥ स्वचित्तेति ॥ स्वचित्तस्ययत्रैवएका

तीर्थक्षेत्रादिगमनंश्रद्धांतत्रपरित्यजेत् ॥ स्वचित्तैकाग्रताय
त्रतत्रासीतसुखंद्विजः॥१७॥ कंबलेमृदुतल्पेवाव्याघ्रचर्मणि
वास्थितः ॥ विविक्तदेशेनियतःसमग्रीवशिरस्तनूः ॥ १८ ॥

ग्रतातत्रैवासीतेति ।"यत्रैकाग्रतातत्रविशेषादासीनःसंभवात्" इत्यधिकरणेषु स्पष्टमेतत् ॥ १७ ॥ कंबलेशुभ्रकंबलेचित्रकंबलेवा । मृदुतल्पेकार्पासपूर्णवस्त्रासनेव्याघ्रचर्मणिवास्थितउपविष्टः । विविक्तदेशेप्राकृतजनवर्जितस्थले नियतोवशीत्यर्थः । समाग्रीवाशिरश्चतनूश्चयस्यसतथा । " समंकायशिरोग्रीवंधारय

न्नचलंस्थिरः" इतिस्मृतेः ॥ १८ ॥ अत्याश्रमस्थइति ॥ विद्वद्युक्तभस्मधार णमत्याश्रमःतेनयुक्तःसन्यस्तिष्ठतिसोऽत्याश्रमस्थइत्युच्यते । तदुक्तंस्कांदेब्रह्म गीतायाम् । " अग्निरित्यादिभिर्मंत्रैर्भस्मनोद्धूलनंतथा ॥ त्रिपुंड्रधारणंचापिवंद त्यत्याश्रमंबुधाः॥ अत्याश्रमस्थःसकलेंद्रियाणिनिरुध्यभक्त्यास्वगुरुंप्रणम्य "इ

अत्याश्रमस्थःसकलानींद्रियाणिनिरुध्यच ॥
भक्त्याथस्वगुरुंनत्वायोगंविद्वांश्चयोजयेत् ॥१९॥

तिकैवल्योपनिषदर्थएवसंगृहीतोऽस्ति । विद्वान्गुरुमुखादधीतयोगशास्त्रःसन् योगंचित्तवृत्तिनिरोधप्रयोजकीभूतप्राणवायुनिरोधंयोजयेत् । अभ्यसेत् । यथा चपतंजलिसूत्रे " योगश्चित्तवृत्तिनिरोधः" इति । तदंगानि " आसनंप्राणसं रोधःप्रत्याहारश्चधारणा । ध्यानंसमाधिरेतानियोगांगानिवदंतिषट् " इति ।

विस्तरस्तुपतंजलिसूत्रभाष्यादवगंतव्यः ॥ १९ ॥ इतआरभ्यकठवल्ल्युपनिषद र्थःसंगृहीतः॥ यस्त्वविज्ञानवानित्यादिना ॥ अविज्ञानवान्विवेकशून्यः । अ तएवाव्यक्तेनमूढेनमनसोपलक्षितः ॥ २० ॥ विज्ञानिनस्तुपुरुषस्ययत्नेनवक्ष्य

यस्त्वविज्ञानवान्भवत्यव्यक्तमनसासदा ॥ तस्यैंद्रियाण्यवश्यानिदु ष्टाश्वाइवसारथेः ॥२०॥ विज्ञानिनस्तुभवतियत्नेनमनसासह ॥ तस्यैं द्रियाणिवश्यानिसदश्वाइवसारथेः ॥ २१ ॥ यस्त्वविज्ञानवान्भव त्यमनस्कःसदाशुचिः ॥ नसतत्पदमाप्नोतिसंसारमपिगच्छति ॥२२॥

माणंभवति । यद्भवतितदेवाह । मनसासहेंद्रियाणितस्यवश्यानीति ॥ २१ ॥ य स्त्विति ॥ अमनस्कश्चंचलचित्तःसदाशुचिर्बाह्याभ्यंतरशौचवानपिविज्ञानरहि तोनतत्पदमाप्नोति । किंतुसंसारमेवगच्छतिप्राप्नोति एवार्थस्त्वपिः ॥ २२ ॥

विज्ञानीति॥ यस्तुविज्ञानीविवेकीसमनस्कःस्थिरचित्तोभवतिसदाशुचिःशुद्धःस तत्पदमवाप्नोति। यस्मात्पदाच्च्युतःसन्भूयोनजायते। संसारीनभवतीत्यर्थः२३ विज्ञानंसारथिर्यस्यमनःप्रग्रहोरश्मिर्यस्यअर्थात्इंद्रियाणिहयायस्य शरीरंरथो यस्यएवंभूतःपुमान्अध्वनःसंसारमार्गस्यैपारंपारभूतमंमवपदंस्वरूपमाप्नोति॥

विज्ञानीयस्तुभवतिसमनस्कःसदाशुचिः ॥ सतत्पदमवा
प्नोतियस्माद्भूयोनजायते॥ २३॥ विज्ञानसारथिर्यस्तुमनः
प्रग्रहएवच॥ सोऽध्वनः पारमाप्नोतिममैवपरमंपदम्॥२४॥
हृत्पुंडरीकंविरजंविशुद्धंविशदंतथा ॥ विशोकंचविचिंत्या
त्रध्यायेन्मांपरमेश्वरम् ॥ २५ ॥

॥ २४ ॥ हृत्पुंडरीकमित्यादयःश्लोकाःप्रायःस्फुटार्थाएव । विरजंरजोगुणका र्यकामादिरहितंअतएवविशुद्धंसत्वगुणकार्यशमादियुक्तं अतएवविशदंनिर्मलंवि शोकंतमोगुणकार्यरहितम् । एवंहृदयांभोजंविचिंत्यअत्रास्मिन्हृत्पुंडरीकेपरमे

श्वरंमायालीलावतारंमांध्यायेत् ॥ २५ ॥ अचिंत्यरूपंअप्रतर्क्यस्वरूपंअव्यक्त मपरिच्छिन्नंअनंतंनिरतिशयंप्रशांतंक्षोभरहितंअमृतंनाशरहितंशिवंकल्याणरूपं कारणंविवर्तरूपकार्यस्येतिशेषः ॥ २६ ॥ एवंउक्तलक्षणंविभुंव्यापकंचिदानंदं

अचिंत्यरूपमव्यक्तमनंतममृतंशिवम् ॥ आदिमध्यांतरहितंप्र
शांतंब्रह्मकारणम् ॥ २६ ॥ एवंविभुंचिदानंदमरूपमजमद्भुतम् ॥
शुद्धस्फटिकसंकाशमुमादेहार्धधारिणम् ॥ २७ ॥ व्याघ्रचर्मांबरध
रंनीलकंठंत्रिलोचनम् ॥ जटाधरंचंद्रमौलिंनागयज्ञोपवीतिनम् २८
व्याघ्रचर्मोत्तरीयंचवरेण्यमभयप्रदम् ॥ पराभ्यामूर्ध्वहस्ताभ्यांबि
भ्राणंपरशुंमृगम् ॥ भूतिभूषितसर्वांगंसर्वाभरणभूषितम् ॥ २९ ॥

ज्ञानसुखस्वरूपंअरूपंरूपरहितंअजंउत्पत्तिशून्यं अद्भुतंमायाश्चर्यतादात्म्याप न्नंसतूशुद्धस्फटिकेत्यादिधर्मविशिष्टंनपरमर्थतः ॥ २७ ॥ २८ ॥ २९ ॥

एवंभूतस्यात्मनःसाक्षात्कारे श्रुत्युक्तंध्यानमुपपादयन्नाह ॥ एवमिति ॥ आत्मैवा रणिःतंकृत्वातथाप्रणवमुत्तरारणिंचकृत्वाध्यानमेवनिर्मथनंतस्याभ्यासात्साक्षा न्मांपश्यति ॥३०॥ सगुणस्यनिर्गुणस्यसाक्षात्कारोध्यानंविनाशास्त्रपांडित्यमा त्रेणनभवतीत्याह ॥ वेदवाक्यैरिति ॥ चेतसाबकवन्निगृहीतेनमनसा ॥३१॥ त

एवमात्मारणिंकृत्वाप्रणवंचोत्तरारणिम् ॥ ध्याननिर्मथनाभ्यासा त्साक्षात्पश्यतिमांजनः ॥ ३० ॥ वेदवाक्यैरलभ्योऽहंनशास्त्रैर्नापिचेत सा॥ध्यानेनवृणुतेयोमांसर्वदाहंवृणोमितम् ॥३१॥ नाविरतोदुश्चरिता न्नाशांतोनासमाहितः॥नाशांतमानसोवापिप्रज्ञानेनलभेतमाम् ॥३२॥

स्माच्छ्रवणादिसध्रीचीनंध्यानमेवकारणमित्याह ॥ नाविरतइति ॥ दुश्चरितात् पापाचरणादविरतोऽनलंबुद्धिःमांनलभेतेतिप्रत्येकंसंबंधः । अशांतोवितृष्णःअ समाहितःश्रवणादावितिशेषः । अशांतमानसश्चंचलचित्तः । प्रज्ञानेनशास्त्रज्ञान

मात्रेणेतिसर्वत्रयोजनीयम् । प्रत्युतशास्त्रज्ञानवतएतेदुर्गुणाःप्रायःप्रादुर्भवंतीति सूचितम्॥३२॥जाग्रदिति॥जाग्रत्स्वप्नसुषुप्त्यादिःप्रपंचोयस्मिन्निति बहुव्रीहिः। अवस्थात्रयेऽपिसाक्षितया यःप्रकाशमानइतियावत् । तद्ब्रह्माहमितिभागत्या गलक्षणयाऽखंडार्थंज्ञात्वावास्थितःसन्सर्वबंधैःप्रमुच्यते। प्रपंचतादात्म्यापन्नोन

जाग्रत्स्वप्नसुषुप्त्यादिप्रपंचोयःप्रकाशते ॥ तद्ब्रह्माहमितिज्ञात्वा
सर्वबंधैःप्रमुच्यते ॥ ३२ ॥ त्रिषुधामसुयद्भोग्यंभोक्ताभोगश्चयद्भ
वेत् ॥ तज्ज्योतिर्लक्षणःसाक्षीचिन्मात्रोऽहंसदाशिवः ॥ ३४ ॥

भवतीतिभावः ॥ ३३ ॥ त्रिष्विति ॥ त्रिषुधामसुजाग्रत्स्वप्नसुषुप्तिषुयद्भोग्यंयश्च भोगःयश्चभोक्ताइदंत्रयंब्रह्मणिकल्पितम् । तथाहियदनुविद्धानियान्यवभासंतेत त्रतानिपरिकल्पितानि। यथायंसर्पोऽयंदंडइयंधारेतिरज्ज्वाइदमंशेनानुविद्धतया भासमानाःसर्पादयस्तत्रपरिकल्पिताः । सदनुविद्धंचेदंभोक्तृभोग्यभोगात्मकंज

गत् अवभासतेऽतोब्रह्मणिसन्मात्ररूपेपरिकल्पितम् । नचतस्यसन्मात्रस्यानव भासे तदनुबंधेनकल्पितावभासःसंभवति । अतःस्वप्रकाशतयातदेवचिन्मात्रस्व रूपं तदेववस्तु । तथाचश्वेताश्वतरश्रुतिः । " भोक्ताभोग्यंप्रेरितारंचमत्वासर्वंप्रो क्तंत्रिविधंब्रह्ममेतत् " इति । यावद्ब्रह्मनजानातितावत्प्रेरयिताभोगप्रदईश्वरःभो क्ताजीवःभोग्यंजगदितिविभागः । ब्रह्ममत्वातुस्थितस्यएतात्रिविधंब्रह्मैवभवती

कोटिमध्याह्नसूर्याभंचंद्रकोटिसुशीतलम् ॥
सूर्यचंद्राग्निनयनंस्मेरवक्त्रसरोरुहम् ॥ ३५ ॥

तितदर्थः । एवंयश्चिन्मात्रःसाक्षीस्वयंप्रकाशःसदाशिवःसोऽहमितियोजना ॥ ३४ ॥ एवंतत्त्वमस्यादिश्रुतिसिद्धमखंडार्थंप्रतिपाद्य सोपाधिकस्यनिरुपाधिकेनसहभे दान्मंदाधिकारिणमुद्दिश्य पुनःसोपाधिकस्यध्यानायनमेवविशिनष्टि ॥ कोटिम ध्यान्हेति ॥ स्मेरंविकसन्मुखकमलंयस्येत्यर्थः । कोटिमध्याह्नसूर्याभमित्यनेन

तापकारित्वंप्राप्तंव्यावर्तयति ॥ चंद्रकोटीति ॥ एवंविधंध्यात्वासर्वबंधैःप्रमुच्यत इतिपूर्वेणान्वयः ॥ ३५ ॥ यदुक्तंसोपाधिकस्यनिरुपाधिकेनसहाभेदइतितदेव प्रतिपादयितुंश्रुतीःश्लोकतःसंगृण्हाति ॥ एकोदेवइति ॥ स्पष्टम् ॥ ३६ ॥ एक इति ॥ यःसृष्टेःपूर्वंएकएवासीत् । " आत्मावाइदमेकएवाग्रआसीत् " इतिश्रु

एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ सर्वाध्य
क्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्च ॥ ३६ ॥ एको
वशीसर्वभूतांतरात्माप्येकंबीजंनित्यदायःकरोति ॥ तंमांनि
त्यंयेऽनुपश्यंतिधीरास्तेषांशांतिःशाश्वतीनेतरेषाम् ॥ ३७ ॥

तेः। सएवसृष्टेरनंतरंसर्वेषांभूतानामंतरात्माप्येकंबीजंमायाख्यंनित्यदाकरोति। स्वसत्तानुविद्धतयासत्तावत्करोतीत्यर्थः। तंमांकर्तारमप्यकर्तारंयेशास्त्राचार्योपदे शमनुसृत्यपश्यंतिसाक्षात्कुर्वंतितेषांशाश्वतीशांतिःकैवल्यरूपामुक्तिःनेतरेषांभेद

ज्ञानिनाम् ॥ ३७ ॥ अग्निरिति ॥ अग्निर्यथाभुवनंलोहादिदाह्यंप्रविष्टस्तदुपाधिवशात्तद्वच्चतुष्कोणदीर्घवक्रसरलत्वाद्याकारंभजेदितिरूपंरूपंप्रतिरूपोबभूवेत्यस्यार्थः । यथाएकःसर्वभूतांतरात्मातत्तदुपाधिभेदाद्भिन्नतयाप्रतीयमानोऽपिलोकदुःखेननलिप्यते । यतोऽयंबाह्यः लोकस्यकल्पितत्त्वेनमिथ्यात्वात्तल्लक्षण

अग्निर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव ॥ एकस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः ॥ ३८ ॥ वेदेहमांयःपुरुषंमहांतमादित्यवर्णंतमसःपरस्तात् ॥ सएवविद्वानमृतोऽत्रभूयान्नान्यःपंथाअयनायविद्यते ॥ ३९ ॥

ज्ञइत्यर्थः॥३८॥ वेदइति ॥ इहसंसारेयःविद्वान्ज्ञानी मांपुरुषंसर्वांतर्यामिणंमहांतंव्यापकंआदित्यवर्णंस्वप्रकाशंतमसःप्रकृतेःपरंस्वात्मत्वेनवेद सएवात्रसंसारे अमृतोमुक्तोभूयाद्भवति । स्वात्मज्ञानंविना अयनायमोक्षायान्यः पंथानास्ती

त्यर्थः ॥ ३९ ॥ हिरण्यगर्भंब्रह्माणंविदधामिसृजामि । प्रहिणोम्युपदिशामि । ईड्यंवरेण्यंनिश्चित्यस्वात्मत्वेनज्ञात्वा ॥ ४० ॥ उपसंहरति ॥ एवमिति ॥ संतानं परंपरा । लीयतेउपाधिनाशान्मत्स्वरूपोभवतीत्यर्थः ॥ ४१ ॥ इतिश्रीशिवगीता

हिरण्यगर्भंविदधामिपूर्वंवेदांश्चतस्मैप्रहिणोमियोऽहम् ॥ तदेवमीड्यं पुरुषंपुराणंनिश्चित्यमांमृत्युमुखात्प्रमुच्यते ॥४०॥ एवंशांत्यादियुक्तः सन्वेत्तिमांयस्तुतत्त्वतः ॥ निर्मुक्तदुःखसंतानःसोंऽतेमय्येवलीयते ४१ इतिश्रीपद्म० उत्त० शिवगी० श्रीराघवसंवादेउपासनाप्रपंचयोगोना मद्वादशोऽध्यायः ॥ १२ ॥ ॥ सूतउवाच ॥ एवंश्रुत्वाकौसलेय स्तुष्टोमतिमतांवरः ॥ पप्रच्छगिरिजाकांतंसुभगंमुक्तिलक्षणम् ॥ १ ॥

टीकायांहरिदीक्षितविरचितायांबालानंदिन्यांद्वादशोऽध्यायः ॥ १२ ॥ एवमुपासाविधिश्रवणानंतरंरामःकिंपृष्टवानितिविवक्षून्मुनीन्प्रतिसूतआह ॥ एवंश्रुत्वे

ति ॥ सुभगंशोभनम् ॥ १ ॥ पूर्वाध्यायांतेसोऽतेमय्येवलीयतइतिसामान्यतोमुक्ति स्वरूपंश्रुत्वाविस्तरतःशुश्रूषूरामउवाच ॥ भगवन्निति ॥ स्वरूपमेवलक्षणंस्व रूपलक्षणंयद्वास्वरूपंलक्षणंच ॥२॥ एवंपृष्टःश्रीभगवान्स्वरूपमुक्तिंविवक्षुरादौ विद्याकर्मजन्याःसातिशयमुक्तीराह ॥ सालोक्यमिति ॥ सलोकस्यभावःसालो

श्रीरामउवाच ॥ भवगन्करुणाविष्टहृदयत्वंप्रसीदमे ॥ स्वरूपलक्षणंमुक्तेःप्रब्रूहिपरमेश्वर ॥ २ ॥ श्रीभगवानुवाच ॥ सालोक्यमपिसारूप्यं सार्ष्ट्यंसायुज्यमेवच ॥ कैवल्यंचेतितांविद्धिमुक्तिंराघवपंचधा ॥ ३ ॥

क्यंएकलोकवासइतियावत् । सारूप्यंसमानरूपत्वंसार्ष्ट्यंसमानैश्वर्यं ऋष्टिःख ड्गःतेनचैश्वर्यंलभ्यते । सहयुंक्तेव्यवहरतीतिसयुक्सयुजोभावःसायुज्यं भूतावेश न्यायेनहिरण्यगर्भादिदेहभोगइत्यर्थः । तदप्राप्तिरेवसायुज्यशब्दार्थइत्यपिके चित् । अत्रचतुष्टयेमुक्तिशब्दोगौणः । इदानींमुख्यमुक्तिमाह ॥ कैवल्यमिति ॥

केवलस्यभावःकैवल्यं इतिगौणमुख्यभेदेनपंचधातांमुक्तिंविद्धि । तत्तच्छब्दनिर्वचनेनैवजानीहिं । तथाचपृथक्पृथग्लक्षणंनवक्तव्यमितिभावः ॥ ३ ॥ सालोक्यमुक्तिप्रापकमाह ॥ मामिति ॥ ज्ञानवर्जितःमत्स्वरूपानभिज्ञःतथापिमांशिवालिंगादौपूजयतियःससालोक्यंयातीत्यर्थः ॥ ४ ॥ ज्ञात्वेति ॥ मत्स्वरूपंज्ञात्वा ई

मपूजयतिनिष्कामःसर्वदाज्ञानवर्जितः ॥ समेलोकंसमासाद्यभुंक्ते
भोगान्यथेप्सितान् ॥४॥ज्ञात्वामांपूजयेद्यस्तुसर्वकामविवर्जितः ॥
मयासमानरूपःसन्ममलोकेमहीयते ॥ ५ ॥ इष्टापूर्तादिकर्माणिम
त्प्रीत्यैकुरुतेतुयः॥ यत्करोतियदश्नातियज्जुहोतिददातियत् ॥६॥

श्वरोदयालुर्देवश्रेष्ठइत्याद्येवंज्ञात्वेत्यर्थः । सर्वकामैःक्षुद्रकामैर्वर्जितः ॥ ५ ॥ सायुज्यप्रापकंकर्माह श्लोकद्वयेन ॥ मयातुल्यंप्राभवंभोगादिसामर्थ्यं नतुजगत्कर्तृत्वादि । तथात्वे केनेश्वरतापसक्तिःस्यात् । अतएवजगद्व्यापारवर्जमितिसूत्रम्॥६॥

॥७॥ परममुक्तिप्रापकमाह ॥ यस्त्विति ॥ शांत्यादिशब्देनसाधनचतुष्टयानंत
रंश्रवणमनननिदिध्यासनसंयुक्तःसन्नित्यर्थः। मामात्मत्वेनपश्यति । ननुप्रत्यक्
ब्रह्मणोरन्योन्यतादात्म्यांगीकारेसतिनाखंडैकरसत्वंसिध्यति । नीलमुत्पलंइत्य
त्रसत्यपितादात्म्येगुणद्रव्यकृतभेदस्यापिसत्त्वात् । एवमत्राप्यात्मत्वब्रह्मत्वकृतो

यत्तपस्यतितत्सर्वंयःकरोतिमदर्पणम् ॥मल्लोकेसश्रियंभुंक्तेमत्तुल्यंप्राभ
वंभजन्॥७॥यस्तुशांत्यादियुक्तःसन्मामात्मत्वेनपश्यति॥सजायतेप
रंज्योतिरद्वैतंब्रह्मकेवलम् ॥ अतःस्वरूपावस्थानंमुक्तिरित्यभिधीयते८

भेदोऽपिप्रसज्येतेतिचेन्न। गुणद्रव्ययोःपरस्परव्यभिचारेणवैषम्यात्। नीलगुणो
मेघादावपिवर्तमानउत्पलंव्यभिचरति । उत्पलद्रव्यमपिशुक्लरक्तोत्पलयोर्वर्तमा
नत्वात् । नीलगुणंद्रव्यंव्यभिचरति । अतस्तत्रार्थभेदान्नाखंडार्थत्वम् । इहत्वात्म
ब्रह्मणोःपरस्परव्यभिचाराभावादेकार्थत्वेसत्यखंडत्वम् । तदुक्तम् । “नात्मताब्र

ह्मणोऽन्यत्रब्रह्मतानात्मनोऽन्यतः। तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम्'' इति। एवंमामात्मत्वेनपश्यतिसःपरब्रह्मज्योतिःस्वप्रकाशमद्वैतंद्वैतभ्रमरहितं जायते। नहिभ्रमहेतावविद्यायांनिवृत्तायांनिर्हेतुकोभ्रमःसंभवति । अतःस्वरूपेणावस्थानंमुक्तिशब्दार्थः। इयमेवपरममुक्तिः। ''ब्रह्मविद्ब्रह्मैवभवति'' इतिश्रुतेः

सत्यंज्ञानमनंतंयदानंदंब्रह्मकेवलम्॥सर्वधर्मविहीनंचमनोवाचामगोचरम् ॥९॥ सजातीयविजातीयपदार्थानामसंभवात्॥अंतस्तद्व्यतिरिक्तानामद्वैतमितिसंज्ञितम् ॥१०॥

॥८॥कीदृशंब्रह्मभवतीत्याशंक्याह ॥ सत्यमिति ॥ उपदेशकालेअतद्व्यावृत्त्यर्थंसत्यत्वादयोधर्माब्रह्मणिअंगीकृताः।वस्तुतःतस्यज्ञानादिस्वरूपमेववाचामगोचरं मुख्ययावृत्त्येतिप्राक्प्रपंचितम्॥९॥ सजातीयेति ॥ तद्व्यतिरिक्तानांब्रह्मव्यतिरिक्तानामित्यर्थः। सजातीयविजातीयपदार्थानांअसंभवात् तेषामंतः अभाव

स्वरूपमित्यर्थः। अयमाशयः। अद्वैतमितियत्संज्ञितंतत्अंतइत्यन्वयः। अद्वैतमितितावद्वैतविरहरूपंतद्विशिष्टंवाबोध्यते। उभयथापिनविरोधः। भावस्वरूपस्यापिघटस्यप्रागभावाभावस्वरूपत्ववत्भावस्वरूपस्यापिब्रह्मणःप्रपंचाभावस्वरूपत्वमिति। विशिष्टत्वपक्षेनह्यभावेनाद्वैतत्वंव्याहन्यते। भावाद्वैतस्यैवांगीका

मत्वारूपमिदंरामशुद्धंयदभिधीयते॥मय्येवदृश्यतेरूपंजगत्स्थावरजंगमम्॥ ११ ॥ व्योम्निगंधर्वनगरंयथादृष्टंनदृश्यते॥ अनाद्यविद्ययाविश्वंसर्वंमय्येवकल्प्यते ॥ १२ ॥

रात्॥ १०॥ यदिदंशुद्धरूपमभिधीयते श्रुतिभिर्लक्षणयेतिशेषः। हेरामतत्मत्वास्वात्मत्वेनज्ञात्वाब्रह्मैवभवतीतिशेषः। स्वस्मिन्नध्यारोपस्यादपवामाह॥ मय्येवेति॥ रूप्यतइतिरूपंअविद्याकार्यंस्थावरजंगमात्मकंजगत्दृश्यते॥ ११॥ व्योम्निगंधर्वनगरंयथादृष्टमपिनदृश्यतेमिथ्याप्रतीयतेतद्वत्विश्वंमयितिष्ठति॥ १२॥

ममेति ॥ निरुपाधिकमत्स्वरूपज्ञानेनेत्यर्थः । यदाजीवेश्वरभेदविधायिनीअविद्याप्रणश्यतितदाएकएवाहंवर्ते । मनोवाचामगोचरइत्यनेनसर्ववृत्तिशून्यताप्रदर्शिता ॥ १३ ॥ सदेति ॥ यद्यप्यहंसदापरमानंदादिरूपएवतथापिकालपंच

ममस्वरूपज्ञानेनयदाविद्याप्रणश्यति ॥ तदैकएववर्ते ऽहंमनोवाचामगोचरः ॥ १३ ॥ सदैवपरमानंदःस्वप्रकाशश्चित्मना॥नकालःपंचभूतानिनदिशोविदिशश्च न॥१४॥मदन्यंनास्तियत्किंचित्तदावर्तेऽहमेकलः॥१५॥ नसंदृशेतिष्ठतिमेस्वरूपंनचक्षुषापश्यतिमांतुकश्चित् ॥

भूतदिगादिभिन्नंसर्वमाधिष्ठानंसाक्षात्कारेणबाध्यते । तदाएकएववर्ते । अन्यदातुजडेनविशिष्टइतिमोक्षसंसारदशयोर्वैलक्षण्योपपत्तिः॥१४॥१५॥निर्गुणंब्रह्मलक्षणेनोपनिषद्भिःप्रतिपाद्यतइत्याह ॥ नसंदृशइति ॥ कठश्रुतिमेवश्लोकतःसंगृ

ह्याति । संदृशेसम्यक्द्रष्टुंमेममस्वरूपंनीलपीतह्रस्वदीर्घाद्याकारंनतिष्ठतिनवि
द्यते। अतएवकश्चिदपिब्रह्मादिर्जीवःचक्षुषामांनपश्यति । यथारूपराहित्त्याच्च
क्षुरविषयत्वंतथाशब्दादिराहित्याच्छ्रोत्राद्यविषयत्वंकठश्रुत्यैवोक्तम् । "अशब्द
मस्पर्शमरूपमव्ययमरसंनित्यमगंधवच्च" इति । कथंतर्हिद्रष्टव्यस्त्वमित्याकां

हृदामनीषामनसाभिक्लृप्तंयेमांविदुस्तेह्यमृताभवंति ॥१६॥
श्रीरामउवाच ॥ कथंभगवतोज्ञानंशुद्धंमर्त्यस्यजायते ॥
तत्रोपायंहरब्रूहिमयितेऽनुग्रहोयदि ॥ १७ ॥

क्षायामाह ॥ हृदेति ॥ हृत्स्थायामनीषाश्रवणात्मिकातयाबुध्या। "सुपांसुलुक्"
इति डादेशः । मनसामननेन अभिक्लृप्तमभिप्रकाशितंनिदिध्यासितमितियाव
त्। ईदृशंमांविदुःसाक्षात्कुर्वंतितेअमृताभवंति। तथाचशब्दादप्यपरोक्षज्ञानंभव
तीतिभावः ॥१६॥ एवमुक्तब्रह्मसाक्षात्कारस्यदुःशकत्वमाशंकमानःपृच्छति॥ क

थमिति॥ भगवतःशुद्धंनिरुपाधिकम् ॥१७॥ एवंपृष्टोभगवानाह ॥ विरज्येति॥
आविरिंचिपदात्ब्रह्मलोकमभिव्याप्येत्यर्थः । "परीक्ष्यलोकान्कर्मचितान्ब्राह्म
णोनिर्वेदमायान्नास्त्यकृतःकृतेन" इतिश्रुतेः । घृणांजुगुप्साम् ॥१८॥ श्रद्धालुरि
ति ॥ लिप्सयाइच्छयाश्रद्धालुःविश्वासवान्उपायनंसमिदादितद्युक्तकरः । "त

श्रीभगवानुवाच ॥ विरज्यसर्वभूतेभ्यआविरिंचिपदादपि ॥ घृणांवित
त्यसर्वत्रपुत्रमित्रादिकेष्वपि ॥१८॥ श्रद्धालुर्मोक्षशास्त्रेषुवेदांतज्ञानलि
प्सया ॥उपायनकरोभूत्वागुरुंब्रह्मविदंव्रजेत्॥१९॥सेवाभिःपरितोष्यै
नंचिरकालंसमाहितः॥ सर्ववेदांतवाक्यार्थंशृणुयात्सुसमाहितः ॥२०॥

द्विज्ञानार्थंसगुरुमेवाधिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठम्" इतिश्रुतेः ॥१९॥
सेवाभिरिति ॥ चिरकालंसेवाभिर्जलाहरणवस्त्रक्षालनगोरक्षणपादसंवाहनादि
रूपाभिरेनंगुरुंपरितोष्यतोषंगमयित्वा समाहितोऽप्रमत्तःसर्ववेदांतवाक्यार्थं अ

वातरतात्पर्यंमहातात्पर्याभ्यांशृणुयात् । वाक्यार्थावबोधेगुरुप्रसादएवकारणमि
तिभावः । “यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ ॥ तस्यैतेकथिताह्यर्थाःप्रकाशंते
महात्मनः” इतिश्रुतेः । “तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया” इतिस्मृतेश्च २०

सर्ववेदांतवाक्यानामपितात्पर्यनिश्चयम् ॥ श्रवणंनामतत्प्रा
हुःसर्वेतेब्रह्मवादिनः ॥ २१ ॥ लोहमण्यादिदृष्टांतैर्युक्तिभिर्यद्वि
चिंतनम् ॥ तदेवमननंप्राहुर्वाक्यार्थस्योपबृंहणम् ॥ २२ ॥

सर्ववेदांतेति ॥ वेदांतवाक्यानामुपक्रमादिभिस्तात्पर्यग्राहकैःषड्भिर्लिंगैर्विशुद्धे
ब्रह्मणितात्पर्यनिर्णयानुकूलोमानसव्यापारःश्रवणशब्दार्थः । अतएवज्ञानविधि
निराकुर्वतामपिश्रवणविध्यभ्युपगमोनविरुध्यते । तात्पर्यंतुतत्प्रतीतीच्छयोच्चरि
तत्वंतत्प्रतीतिजनकत्वंवा ॥ २१ ॥ लोहेति ॥ लोहमण्यादिदृष्टांताःश्रुतिषुप्रसि

द्ववेदितव्याः ॥ २२ ॥ २३ ॥ यत्सदेति ॥ ध्यानयोगेनतद्रूपेणोपायेनेत्यर्थः । "योगःसन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरः । आत्मनिबुद्धावात्मानंसच्चिदानंदस्वरूपमीक्षतेयत्तद्ध्यानंनिदिध्यासनंस्मृतमित्यर्थः । विजातीयवृत्त्यभावेन

निर्ममोनिरहंकारःसमःसंगविवर्जितः॥ सदाशांत्यादियुक्तः
सन्नात्मन्यात्मानमीक्षते ॥ २३ ॥ यत्सदाध्यानयोगेनतन्नि
दिध्यानंस्मृतम् ॥२४॥ सर्वकर्मक्षयवशात्साक्षात्कारोऽपि
चात्मनः॥ कस्यचिज्जायतेशीघ्रंचिरकालेनकस्यचित् ॥२५॥

सजातीयवृत्तिधारणंनिदिध्यासनशब्दार्थः ॥२४॥ कृतेऽपिनिदिध्यासनेप्रतिबंधकसद्भावाभ्यांसाक्षात्कारविलंबौप्रतिपादयति ॥ सर्वकर्मेति ॥ ज्ञानोत्पत्त्याबंधककर्मणांक्षयवशाच्छीघ्रंकस्यचिदात्मसाक्षात्कारोजायते। प्रतिबंधकसद्भावेतुविलं

नेनेत्यर्थः ॥ २५ ॥ कूटस्थानीति ॥ कूटस्थानिअनारब्धकार्याणिकोटिजन्मभि
रर्जितान्यपिज्ञानेनैवविनश्यंति । कर्मणांश्रौतस्मार्तादीनामयुतैरपिअनेककर्मानु
ष्ठानैरपिननश्यंतीत्यर्थः । "यथैधांसिसमिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन" इतिस्मृ
तेः । "नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपि" इतिश्रुतिर्ज्ञानादन्यत्रकर्मक्षया

कूटस्थानीहकर्माणिकोटिजन्मार्जितान्यपि ॥ ज्ञानेनैव
विनश्यंतिनतुकर्मायुतैरपि ॥ २६ ॥ ज्ञानादूर्ध्वंतुयत्किं
चित्पुण्यंवापापमेववा ॥ क्रियतेबहुवाप्यल्पंनतेनायंवि
लिप्यते ॥२७॥ शरीरारंभकंयत्तुप्रारब्धंकर्मजन्मिनः ॥

भावेमानम् । अनेनसर्वेषांसंचितकर्मणांज्ञाननाश्यत्वमुक्तम् ॥२६॥ ज्ञानादूर्ध्व
मिति ॥ पुण्यंपुण्यसाधनंविहितंकर्मेत्यर्थः । पापंपापसाधनंनिषिद्धंकर्मेत्यर्थः । य
त्ज्ञानिनाल्पंबहुवाक्रियतेतेनकर्मणायंज्ञानीनलिप्यते ॥ २७ ॥ शरीरारंभक

मिति ॥ जन्मिनोदेहिनोऽपिज्ञानिनःयत्प्रकृतशरीरारंभकंप्रारब्धंकर्मोच्यतेत तुभोगेनैवनष्टंस्यात्क्षीयतइत्यर्थः । नतुज्ञानेननश्यतिअत्रप्रमाणानि । "तद धिगमउत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । तस्यतावदेवचिरं" इति । "यथापुष्करपलाशआपोनश्लिष्यंतएवंविदिपापकर्मनश्लिष्यते" इति ॥२८॥ न

तद्भोगेनैवनष्टंस्यान्नतुज्ञानेननश्यति ॥ २८ ॥ निर्मोहोनिरहंकारोनिर्लेपःसंगवर्जितः ॥ सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ॥ यःपश्यन्संचरत्येषजीवन्मुक्तोऽभिधीयते ॥ २९ ॥

नु निदिध्यासनस्यात्मसाक्षात्कारहेतुत्वेकृतनिदिध्यासनानामपिकेषांचित्साक्षात्कारानुपपत्तिःकथंसमर्थयितव्येत्याशंक्याह ॥ निर्मोहइति ॥ निर्गतोमोहोविवेकोयस्मात्सतथाविवेकसंपन्नइत्यर्थः । निरहंकारःदेहाध्यासरहितः । निर्लेपआसक्तिरहितः । संगःस्त्रीपुत्राद्यध्यासस्तेनवर्जितः । तदुक्तंबृहन्नारदीये । "यान्यान्

हिकुरुतेजंतुःसंबंधान्मनसःप्रियान् । तएवास्यनिखन्यंतेहृदयेशोकशंकवः" इति । सर्वभूतेषुचात्मानमनुस्यूतंतथासर्वभूतानिचात्मनिअध्यस्तानियःपश्यन्संचरतिएषजीवन्मुक्तइत्यभिधीयते । निर्मोहइत्यादिनानिवृत्तमायावरणइत्यर्थःसूचितः । संचरतीतियावत्प्रारब्धंविक्षेपानुवृत्तिःसूचिता । "भूयश्चांतेविश्वमायानिवृत्तिः" इतिश्रुतेः ॥२९॥ अहिनिर्ल्वयिनीति ॥ अहेःसर्पस्यनिर्ल्वयिनीत्वक्

अहिनिर्ल्वयिनीयद्वद्द्रष्टुःपूर्वंभयप्रदा ॥ त
तोऽस्यनभयंकिंचित्तद्वद्द्रष्टुरयंजनः ॥३०॥

कंचुकापरपर्यायासायथाद्रष्टुर्जनस्यपूर्वंसर्पशरीरावस्थानदशायांभयप्रदाभवति ततःसर्पशरीरत्यागानंतरंअस्यद्रष्टुस्तस्याःसकाशात्किमपिभयंनभवतितद्वदयं जीवन्मुक्तःपूर्वंयेषांभयप्रदआसीत्तेषामपिसांप्रतंभयप्रदोनेत्यर्थः । "तद्यथाहि निर्ल्वयिनीवल्मीके" इत्यादिबृहदाररण्यकश्रुतेः । तदुक्तंस्कांदे । "त्यक्त्वाल

चंपुनःसर्पःस्वात्मत्वेननपश्यति। तथाविद्वान्नदेहादिमात्मत्वेनाध्यवस्यति" इति ॥ ३० ॥ विरज्यसर्वभूतेभ्यइत्यारभ्यएतावत्पर्यंतंक्रमिकाणिसाधनान्युपन्यस्तानि । तेषुवैराग्याख्यंसाधनमेवदुर्लभतरं तस्मिन्सिद्धेउत्तरोत्तरसाधनानिजातप्रायाणीत्याशयेनाह ॥ यदेति ॥ वासनाएवकामशब्दार्थःअस्यवशंगताःहृदि

यदासर्वेप्रमुच्यंतेकामायेऽस्यवशंगताः ॥ अथमर्त्योऽमृतोभवत्येतावदनुशासनम् ॥ ३१ ॥ मोक्षस्यनहिवासोऽस्तिनग्रामांतरमेववा ॥ अज्ञानहृदयग्रंथिनाशोमोक्षइतिस्मृतः ॥ ३२ ॥

विद्यमानाइत्यर्थः । अथवासनाक्षयसमनंतरमेवमर्त्यःअमृतोभवतिअनुशासनं शिक्षा। किंबहुनोक्तेनवैराग्यविधुरस्यवेदांतपांडित्यंवणिग्वृत्तिरेवेतिभावः॥३१॥ वैराग्यपूर्वकंज्ञानोत्पत्तौसत्यांनमोक्षेविलंबइत्याह ॥ मोक्षस्येति ॥ मोक्षस्यवासोऽवस्थानंनास्ति कैलासवैकुंठादावितिशेषः । ग्रामात्ग्रामांतरंप्रतिगमनंयथा

तथामोक्षस्यगमनंनास्ति। तर्हिकोनाममोक्षस्तत्राह । अज्ञानं तत्कार्यंहृदयग्रं थिरहमितितादात्म्याध्यासरूपश्च। तयोर्नाशएवमोक्षइत्यर्थः ॥३२॥ तत्रदृष्टांत माह॥वृक्षाग्रेति॥यथावृक्षाग्रात्च्युतपादस्यभूमिप्राप्तौनविलंबस्तथाज्ञानिनोमु क्तावपिनविलंबइतिभावः॥३३॥ तीर्थइति॥ तीर्थेवाभवतुचांडालगेहेवाउभयथा

वृक्षाग्रच्युतपादोयःसतदैवपतत्यधः ॥ तद्वज्ज्ञानवतोमु
क्तिर्जायतेनिश्चितापितु॥ ३३ ॥ तीर्थेचांडालगेहेवायदिवा
नष्टचेतनः॥ परित्यजन्देहमेवंज्ञानादेवविमुच्यते ॥ ३४॥

प्यविशेषइतिभावः। तथायदिवानष्टचेतनःब्रह्माकारवृत्तिशून्यःयदिवातद्वान्देहंप रित्यजन् एवंयेनकेनापिप्रकारेणजीन्मुक्तश्चरमदेहपातानंतरंब्रह्मैवभवतीतिभा वः।आवरणस्यतुपूर्वमेवनिवृत्तत्वात्।विक्षेपस्यतुदेहपातावधिकत्वाच्च"तस्यताव देवचिरम्" इत्यादिश्रुतेश्च तीर्थादिमरणंपुण्यसाधनंचांडालगेहादिमरणंपापसा

धनमितिव्यवस्थेयमज्ञजनविषयिण्येवनज्ञानिविषायिणीतिदिक्॥३४॥जीवन्मुक्त स्यस्थितिमाह॥संवीतइति॥येनकेनोत्तमेनाधमेनवावस्त्रेणसंवीतःसंवृतःतथाभ क्ष्यमभक्ष्यंवाश्नन्यत्रकुत्रापिवाशयानःसजीवन्मुक्तः।अत्रप्रारब्धक्षयेसतिमुच्य

संवीतोयेनकेनाश्नन्भक्ष्यंवाभक्ष्यमेववा ॥ शयानोयत्रकुत्रापि
सर्वात्मामुच्यतेऽत्रसः॥३५॥ क्षीराद्दुद्धृतमाज्यंयत्क्षिप्तंपयसित
त्पुनः ॥ नतेनैवैकतांयातिसंसारेज्ञानवांस्तथा ॥ ३६ ॥ नित्यं
पठतियोऽध्यायमिमंरामशृणोतिवा ॥ समुच्यतेदेहबंधादना
यासेनराघव ॥ ३७ ॥ ततःसंशयचित्तस्त्वंनित्यंपठमहीपते ॥

ते।इदंलोकदृष्ट्योक्तम्।यतोऽसौसर्वात्माप्रपंचाधिष्ठानंतस्यमोक्षइत्युपचारमात्र मितिभावः॥३५॥जीवन्मुक्तावस्थायांबाधितानुवृत्त्यादेहादिसंसारंपश्यन्नपिपूर्ववृ त्तेननलिप्यतइत्यस्मिन्नर्थेलौकिकंदृष्टांतमाह॥क्षीरादिति॥३६॥३७॥ततइति॥

असंभावनादिभिः संदिहानचित्तस्त्वं नित्यमिमंमोक्षसाधनीभूतक्रममनुष्ठातु मसमर्थश्चेत्तर्हीममध्यायंनित्यंपठ तेनैवमोक्षमाप्स्यसि । कालांतरेणोक्तसाधनसंपन्नःसन्नित्यर्थः । रामंनिमित्तीकृत्यलोकानुग्रहार्थमयंगीतोपदेशोनतुरामंप्रति तस्यब्रह्मरूपत्वादितिहृदयम् ॥ ३८ ॥ इतिश्रीलक्ष्मीनरहरिसूनुविरचितायांशिव

अनायासेनतेनैवसर्वथामोक्षमाप्स्यसि ॥ ३८ ॥ इतिश्रीपद्मपुराणेशिवगीता॰मोक्षनि॰त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीरामउ॰ ॥ भगवन्यदितेरूपंसच्चिदानंदविग्रहम् ॥ निष्कलंनिष्क्रियंशांतंनिरवद्यंनिरंजनम् १

गीताटीकायांबालानंदिन्यांमोक्षयोगोनामत्रयोदशोऽध्यायः ॥ १३ ॥ एवंमहताप्रबंधेनब्रह्मसाक्षात्कारसाधनानिप्रतिपादितानि तानिश्रुत्वा पुनरुपायांतरमाकांक्षमाणःश्रीरामआह ॥ भगवन्निति ॥ यदीत्यस्ययद्यपीत्यर्थः । हेभगवन् तेरूपं सच्चिदानंदात्मकं निष्कलंअवयवरहितं निष्क्रियंउत्क्षेपणादिपंचविधकर्मरहितं

अतएवशांतंनिस्तरंगसमुद्रसदृशं निरवद्यंनिर्दोषम्।"अपापविद्धम्"इतिश्रुतेः। निरंजनंनिःसंगम्॥१॥ सर्वधर्मविहीनं धर्मधर्मिकल्पनायाअविद्यामूलकत्वात्। अतएवमनोवाचामगोचरं सर्वतः स्थितंआत्मानंबिंबभूतंत्वांप्रतियथावत् ईक्षते प्रकाशते। सर्वव्यापितयासर्वत्रानुस्यूततयेत्यर्थः। तवमायोपहितत्वेऽप्यनावृत

सर्वधर्मविहीनंचमनोवाचामगोचरम्॥ सर्वव्यापितयात्मा
नमीक्षतेसर्वतःस्थितम् ॥ २ ॥ आत्मविद्यातपोमूलंतद्ब्रह्मो
पनिषत्परम्॥ अमूर्तंसर्वभूतात्माकारंकारणकारणम्॥ ३ ॥

स्वरूपत्वादितिभावः॥२॥ अनावृतस्वरूपस्यबिंबीभूतस्येश्वरस्यतवयत्सर्वदाप्र त्यक्षंतद्वस्तु कीदृशंतदाह ॥ आत्मेति ॥ आत्मविद्याचतपश्चतदुभयंमूलंसाधनं यस्मिन्तत्। सर्वेषांजीवानांपरोक्षत्वात् ब्रह्मनिरतिशयवृद्धिमत्। उपनिषदांपरं महातात्पर्यविषयीभूतं अमूर्तंअपरिच्छिन्नं सर्वेभूतात्मानोजीवाआकाराअंशाइ

वांशायस्यतत्तथा । " तदनुप्रविश्य सच्चत्यच्चाभवत् " इतिश्रुतेः । सर्वेषांकार णानांमायादीनामपिकारणं सत्ताप्रदत्वात् ॥ ३ ॥ यत्तदिति ॥ यद्ब्रह्म अद्रेश्यं अदृश्यमित्यर्थः । तथाअग्राह्यंदुर्विज्ञेयं एतादृशंतत्कथंवाग्राह्यंभवेत् तवतुबिंब रूपस्यानावृतस्वरूपत्वात् तद्ब्रह्मप्रत्यक्षमेवसदास्ति । अत्रातिसूक्ष्मेदुर्विज्ञेये

यत्तदद्रेश्यमग्राह्यंतद्ग्रह्यंवाकथंभवेत् ॥ अत्रोपा
यमजानानस्तेनभिन्नोऽस्मिशंकर ॥४॥ श्रीशिवउ
वाच ॥ शृणुरामप्रवक्ष्यामितत्रोपायंमहाभुज ॥

ब्रह्मणिकथंचित्तंप्रवर्तव्यमिति उपायमजानानस्तेनकारणेनभिन्नोऽस्मि अवि द्याप्रयुक्तभेदवान्सन् व्याकुलस्तिष्ठामीतिभावः ॥४॥ तत्रोपायंविवक्षुः शिवआ ह ॥शृणिवति॥ सगुणस्यममोपासनाभिराराधनाभिस्तत्रदुर्विज्ञेयवस्तुनिस्थूल सौरांभिकान्यायेनचित्तंप्रवर्तयेदित्यन्वयः । सूरस्येमेसौरामरीचयस्तेष्वध्यस्तः

स्तंभःसौरांभः तस्याख्यानंसौरांभिका। तत्करोतीतिआख्यानार्थकणिजंताद्धा त्वर्थनिर्देशेण्वुच्। इक्षुभक्षिकेत्यादिवत्। उक्तन्यायस्त्वित्थम्। यथातृषार्तंदृष्ट्वा प्रथमंमृगजलमिदमेवजलमितिदर्शयित्वातावद्दूरंप्रतारणयानीत्वापश्चाद्वास्तवं जलमंगुलिनिर्देशेनोपदिशति। एतत्सजातीयाः शाखाचंद्रस्थूलारुंधतीत्यादयो ऽपिज्ञेयाः। अतोनिर्गुणेचित्तप्रणिधानार्थंसगुणोपास्तिः प्रथमंकर्तव्या। तदु

**सगुणोपासनाभिस्तुचित्तैकाग्र्यंविधायच॥ स्थूलसौरांभिकान्या यात्तत्रचित्तंप्रवर्तयेत्॥ ५॥तस्मिन्नन्नमयेपिंडेस्थूलदेहतनूभृताम्॥**

क्तम्। "निर्विशेषंपरंब्रह्मसाक्षात्कर्तुमनीश्वराः। येमंदास्तेऽनुकंप्यंतेसविशेषनि रूपणैः॥ वशीकृतेमनस्येषांसगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपा धिकल्पनाम्" इति॥५॥ उपक्रांतन्यायेनपंचकोशानूक्रमेणनिराकर्तुंप्रतिजानी ते॥ **तस्मिन्निति** ॥ तस्मिन्स्थूलदेहस्वरूपेअन्नविकारत्वादन्नमयेपिंडेजन्म

व्याध्यादीनां निलये तनूभृतांदेहिनांअहंमानादंतःकरणतादात्म्याध्यासादात्म बुद्धिर्दृढास्ति साकदापिनहीयते॥६॥ आत्माकीदृशइत्याकांक्षायामाह ॥ आत्मेति ॥ उभयत्रहेतुर्नित्यइति॥७॥ देहःकीदृगित्याकांक्षायामाह॥ यदिति ॥ एतेष

जन्मव्याधिजरामृत्युनिलयेवर्ततेदृढा ॥ आत्मबुद्धिरहंमानात्क
दाचिन्नैवहीयते ॥ ६ ॥ आत्मानजायतेनित्योम्रियतेवाकथंचन
॥७॥ यज्जायतेऽस्तिविपरिणमतेवर्धतेऽपिच ॥ क्षीयतेनश्यतात्ये
तेषड्भावावपुषःस्मृताः ॥ ८ ॥ आत्मनोनविकारित्वंघटस्थन
भसोयथा ॥ एवमात्माऽवपुस्तस्मादितिसंचिंतयेद्बुधः ॥ ९ ॥

ड्भावाविकाराइत्यर्थः। वपुषोदेहस्यैवनात्मनः ॥ ८ ॥ तत्रदृष्टांतः। यथाविकारित्वंघटस्यैवनतदवच्छिन्नस्यनभसः। एवमात्मवपुषोःपरस्परंवैधर्म्येसतिअविद्यातादात्म्यापन्नोऽहमितिदेहमेवात्मेतिअज्ञोमन्यते। विवेकीतुआत्मा अवपुरि

तिविचार्यतस्मादन्यमात्मानंप्राणमयंचिंतयेत् ॥९॥ एवंप्रागुक्तवैधर्म्यबलेनान्नमयस्यानात्मत्वेनिर्णीते ततआंतरः प्राणमयआत्मत्वेननोपदेष्ठव्यइत्याशयेनाह ॥ मूषेति ॥ मूषायांनिक्षिप्तंहेमयथातदाकारंतत्संश्लिष्टंततोऽभ्यर्हितंचतथेतिभावः। अन्नमयस्यांतरः प्राणमयः कोशोऽस्ति । अत्रब्रह्मभावनाकर्तव्यत्वादुपासनंभ

मूषानिक्षिप्तहेमाभःकोशःप्राणमयोभवेत् ॥ क्षुत्पिपासापराभूतोनायमात्मायतोजडः ॥ १० ॥ चिद्रूपआत्मायेनैवस्वदेहमभिपश्यति ॥ आत्मैवाहिपरंब्रह्मनिर्लेपःसुखनीरधिः ॥ ११ ॥

वति ।इदंसर्वकोशानांसमानम् ।तत्तदुपासनफलंब्रह्मवल्यांस्फुटमभिहितम्।ततः शुद्धचित्तएवंविचारयति।अयंप्राणमयः कोशोनात्मा यतोऽयंजडः क्षुत्पिपासाभ्यां व्याकुलश्च॥१०॥ चिद्रूपइति ॥ चिद्रूपोज्ञानस्वरूपः। येनात्मनैवस्वदेहंपश्यति। सआत्मैवपरंब्रह्म। सकीदृशः निर्लेपः दुःखलेपरहितः। अतएवसुखनीरधिरानं

दसमुद्रः ॥११॥ नतदिति ॥ ततअज्ञानंकर्तृ एतद्ब्रह्मनाश्नाति नकवलीकरोति वशीकरोतीतियावत् । किंचतद्ब्रह्मकिंचनयदज्ञानंअश्नातिस्वसत्ताकवलितंकरोतीत्यर्थः । एतादृशंब्रह्म प्राणमयःकोशः कथंस्यादितिभावः । तदुक्तंशंकरभगवत्पादैः । " अन्नप्राणमनोमयविज्ञानानंदपंचकोशानाम् । एकैकांतरभाजांभजतिविवेकांशतामात्मा ॥ वपुरिदमन्नमयाख्यः कोशोऽनात्माघटप्रायः । प्रागुत्प

नतदश्नातिकिंचैतत्तद्यदश्नातिकिंचन ॥ १२ ॥ ततःप्राणमयेकोशेकोशोऽस्त्येवमनोमयः॥ससंकल्पविकल्पात्माबुद्धींद्रियसमायुतः॥१३॥

त्तेःपश्चात्तदभावस्यापिदृश्यमानत्वात् ॥ कोशः प्राणमयोऽयंवायुविशेषोवपुष्यवच्छिन्नः । अस्यकथमात्मतास्यात् क्षुत्तृष्णाभ्यामुपेयुषःपीडाम्" इति ॥ १२ ॥ मनोमयकोशमाह ॥ ततइति ॥ सः मनोमयः संकल्पविकल्पस्वरूपइत्यर्थः । अन्यत्स्पष्टम् । " कुरुतेवपुष्यहंतांगेहादौयःकरोतिममतांच । रागद्वेषविधौयो

नासावात्मामनोमयःकोशः" इत्याहुराचार्यपादाः ॥ १३ ॥ पूर्वोक्तसंकल्पवृत्तिभेदानाह ॥ कामइति ॥ कामादयस्त्वेतेमनोमयकोशस्यधर्मा वृत्तिविशेषाइत्यर्थः । तथाचश्रुतिः । " कामःसंकल्पोविचिकित्साश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेति " ॥ तत्रत्विति ॥ प्रागुक्तेऽन्नमयकोशेएतेधर्माः स्फुट

कामःक्रोधस्तथालोभोमोहोमात्सर्यमेवच॥मदश्चेत्यरिषड्वर्गोममतेच्छादयोऽपिवा॥मनोमयस्यकोशस्यधर्माएतस्यतत्रतु॥१४॥याकर्मविषया बुद्धिर्वेदशास्त्रार्थनिश्चिता॥सातुज्ञानेंद्रियैःसार्धंविज्ञानमयकोशतः॥१५॥

मभिव्यज्यंतइतिशेषः ॥ १४ ॥ विज्ञानमयकोशमाह ॥ येति ॥ कर्मेत्युपलक्षणं वैदिकंवालौकिकंवाकर्मभवतुतद्विषयिणीबुद्धिः वेदाश्चशास्त्राणिच । इदमप्युपलक्षणं लौकिकंवागृहकृत्यादि तेषामर्थेनिश्चितासतीसाबुद्धिःज्ञानेंद्रियैः सार्धंविज्ञानमयकोशतः । सार्वविभक्तिकस्तसिः विज्ञानमयकोशइत्यर्थः । तदा

हुः। सुप्तेस्वयंविलीनाबोधेव्याप्त्वाकलेवरंसकलम्। विज्ञानशब्दवाच्याचित्प्र
तिबिंबानबुद्धिरप्यात्मा " इति। इहेतिपरमार्थतस्तुब्रह्मेतिभावः॥ १५॥ योऽयं
जीवन्मुक्तस्तस्यत्रीणिशरीराणिस्थूलंसूक्ष्मंकारणात्मकंचेति। तत्रस्थूलमन्नमय
कोशः। लिंगशरीरंतुसूक्ष्मंसप्तदशकलात्मकंप्राक्प्रपंचितम्। तत्रप्राणमयमनो

इहकर्तृत्वाभिमानीसएवतुनसंशयः॥ इहामुत्रगतिस्तस्यसजीवो
व्यावहारिकः॥ १६॥ व्योमादिसात्विकांशेभ्योजायंतेधींद्रिया
णितु ॥ व्योम्नःश्रोत्रंभुवोघ्राणंजलाज्जिह्वाऽथतेजसः॥ १७॥

मयविज्ञानमयानांत्रयाणामंतर्भावः। सुषुप्तौभासमानमविद्यावच्छिन्नंकारणश
रीरं सएवानंदमयः कोशः॥ १६॥ तत्रलिंगशरीरे काःसप्तदशकलाइत्याशंक्य
ताएवानुक्रामति॥ व्योमादिति॥ धींद्रियाणिज्ञानेंद्रियाणि एकैकस्मादेकैक

स्योत्पत्तिः ॥ १७ ॥ १८ ॥ सर्वेषांसात्विकांशेभ्यः बुद्धिमनसीजायेते। बुद्धिर्निश्च यात्मिकाभवति अर्थान्मनःसंशयात्मकामितिभावः ॥१९॥२०॥ एवमिति ॥ सप्त

चक्षुर्वायोस्त्वगुत्पन्नातेषांभौतिकताततः ॥ १८ ॥ व्यो
मादीनांसमस्तानांसात्विकांशेभ्यएवतु ॥ जायेतेबुद्धिमन
सीबुद्धिःस्यान्निश्चयात्मिका ॥ १९ ॥ वाक्पाणिपादपायूप
स्थानिकर्मेंद्रियाणितु ॥ व्योमादीनांरजोंऽशेभ्योव्यस्तेभ्य
स्तान्यनुक्रमात् ॥ २० ॥ समस्तेभ्योरजोंऽशेभ्यःपंचप्राणा
दिवायवः ॥ जायंतेसप्तदशकमेवंलिंगशरीरकम् ॥ २१ ॥

दशानांसंघः सप्तदशकम्।संघार्थेकन्। "षोडशकलाः पुरुषायमाणाः पुरुषंप्रा प्यास्तंगच्छंति" इतिश्रुतिस्तुमनोबुद्ध्योरेकत्वविवक्षयाप्रवृत्तेतिज्ञेयम्॥ २१ ॥

एतदिति ॥ यस्यामवस्थायाजाग्रत्स्वप्नरूपायांएतत्पूर्वोक्तं लिंगशरीरं तप्तायः
पिंडवत्परस्पराध्यासात्साक्षिचैतन्येनसहसंयुतंभवतीतिशेषः॥ २२॥ तदिति॥
आनंदमयः कोशः लिंगशरीराध्यासाद्भोक्तृत्वंप्रतिपद्यते। विद्योपासना कर्मश्रौ
तादि आदिपदादविहितकर्मादिसंग्रहः। तेषामिहामुत्रभोक्तास्मृतः। आनंदमय

एतल्लिंगशरीरंतुतप्तायःपिंडवद्यतः॥परस्पराध्यासयोगात्साक्षिचै
तन्यसंयुतम् ॥२२॥ तदानंदमयःकोशोभोक्तृत्वंप्रतिपद्यते ॥ विद्या
कर्मफलादीनांभोक्तेहामुत्रसस्मृतः ॥२३॥ यदाऽध्यासंविहायैषस्व
स्वरूपेणातिष्ठति॥अविद्यामात्रसंयुक्तःसाक्ष्यात्माजायतेतदा॥२४॥

शब्देनतदवच्छिन्नोजीवः। सतुतत्तच्छरीराध्यासात्तत्रतत्रकर्ताभवतीतिभावः २३
यदेति॥सुषुप्तौएषआत्मालिंगाध्यासंविहायस्वास्मिन्बिंबरूपेणप्रतिबिंबरूपेण
समुद्रमग्नघटवत्तिष्ठति। अविद्यामात्रसंयुक्तःसन् तदासाक्षीजायते॥ "एषसंप्र

सादोऽस्माच्छरीरात्समुत्थायपरंज्योतीरूपंसंपद्यते" इतिश्रुतेः॥२४॥ ननु तर्हि जाग्रदादौसाक्षीनास्त्येव तथासतिअवस्थात्रयसाक्षित्वंप्रागुक्तंव्याकुप्येतेत्याशंक्याह॥ द्रष्टेति॥ अंतःकरणादीनामिंद्रियाणांतथातत्तद्वृत्तीनामनुभवस्मृतिरूपाणांसजीवोद्रष्टासाक्षीत्यर्थः। अंतःकरणाध्यासात् अध्यासवत्त्वेनसाक्षिणोऽप्यात्म

द्रष्टांतःकरणादीनामनुभूतेःस्मृतेरपि ॥ अतोऽन्तःकरणाध्यासादध्यासित्वेनचात्मनः॥ भोक्तृत्वंसाक्षिताचेतिद्वैधंतस्योपपद्यते ॥ २५ ॥ आतपश्चापितच्छायातत्प्रकाशेविराजते ॥

नोभोक्तृत्वंसाक्षिताचद्वैधंद्वैविध्यंतस्यजीवस्योपपद्यते।अंतःकरणस्योपाधित्वेसाक्षित्वंविशेषणत्वेभोक्तृत्वंचेति। बिंबस्यतुसाक्षित्वमेव।तस्यापिअविद्याविशेषणत्वेकर्तृत्वं तथाप्यनावृतत्वात्साक्ष्येवेत्युच्यतइतिभावः॥२५॥आतपइति॥ आतपइवातपःअनावृतबिंबस्वरूपंछायेवछायाआवृतप्रतिबिंबस्वरूपंइत्युभयंकल्पित

भेदः । तत्प्रकाशेतास्मिन्नेवब्रह्मात्मकेप्रकाशेविराजतेप्रकाशते । तत्रान्योजीवोदुः
खसुखादिकर्मफलभोक्ता । एकइश्वरोभोजयिता । एतेन ऋतंपिबंतौसुकृतस्यलो
केगुहांप्रविष्टौपरमेपरार्धे । छायातपाविति पिबदपिबतोःपिबच्छब्दोगौणः । छत्र्य
छत्रिशब्दवत् । वस्तुतस्तुजीवेश्वरब्रह्मणामैक्यमेव । भेदविधायिन्याअविद्याया

एकोभोजयितातत्रभुंक्तेऽन्यःकर्मणःफलम् ॥ २६ ॥ क्षेत्रज्ञं
रथिनंविद्धिशरीरंरथमेवतु ॥ बुद्धिंतुसारथिंविद्धिप्रग्रहंतुम
नस्तथा ॥ २७ ॥ इंद्रियाणिहयान्विद्धिविषयास्तेषुगोचराः ॥

मिथ्यात्वात् । तदुक्तम् "विभेदजनकेऽज्ञानेनाशमात्यंतिकंगते । तदाजीवेशयोर्भे
दमसंतंकःकरिष्यति" इति । "तत्रकोमोहःकःशोकएकत्वमनुपश्यतः" इत्यादि
श्रुतेरितिदिक् ॥ २६ ॥ कठवल्लीमर्थतःसंगृण्हाति ॥ क्षेत्रज्ञमिति ॥ प्रग्रहंरशनारूपं
मनोबुद्धिंचसारथिम् ॥ २७ ॥ तेष्वश्वेषुसंक्रमितुंप्रवृत्तेषुविषयाःशब्दादयःगोचराः

संचरणप्रदेशाभवंतीतिविद्धि। तथाचपूर्वोक्तैरिंद्रियैर्मनसायुक्तंपुरुषमात्मानंभो
क्तारंविद्धि अन्यथाऽभोक्तारंविद्धीतिभावः। तथाचन्यायः "यथाचतक्षोभयथा"
इति॥ २८॥ अतएवाकर्त्रात्मस्वरूपलाभायपंचकोशनिरासपूर्वकमात्मोपासनं
दृष्टांतेनोपपादयति॥ एवमिति॥ उद्घाट्येति॥ यथाकदलीतरोरेकैकंयथातथाव
ल्कलानिउद्घाट्योद्घाटयततःपश्चात्सारंलभते।तथाचपंचसुकोशेष्वेकमेकंनिराकृ

इंद्रियैर्मनसायुक्तंभोक्तारंविद्धिपूरुषम् ॥२८॥ एवंशांत्यादियुक्तःस
न्नुपास्तेयःसदाद्विजः॥ उद्घाट्योद्घाट्यैकमेकंयथैवकदलीतरोः २९

त्यापरस्मिन्नपरस्मिन्क्रमान्मनःसंक्रमयन् तेषांमध्येसारभूतमात्मानंविंदतिप्रा
प्नोति। अपिशब्दात्। "योवेदनिहितंगुहायां" इतिश्रुतिर्दर्शिताभवतीतिभावः।
नन्वानंदमयस्यकथंकोशत्वंकोशस्याविद्याकार्यत्वात्आनंदमयस्तुब्रह्मेतिचेन्न।
आनंदमयस्यब्रह्मपुच्छंप्रतिष्ठेतिवाक्यार्थभूतसर्वाधारब्रह्मप्रतिपत्त्युपायतयैवश्रु

तोऽप्राप्तादितत्वात्। आनंदमयोऽभ्यासादित्यधिकरणेभाष्यकारैरित्थंसिद्धांति तत्वाच्च ॥ २९ ॥ ३० ॥ ३१ ॥ तदेवंपंचकोशानतिक्रम्यानंदमयादप्यांतरं "ब्रह्मपुच्छंप्रतिष्ठा" इतिश्रुत्यास्वप्राधान्येननिर्दिष्टंवास्तवस्वरूपमाह ॥ एवंमन इति॥ एवमुक्तरीत्यापंचस्वपिकोशेषुनिराकृतेषुतदधिष्ठानेब्रह्मणि मनःसमाधा

वल्कलानिततःपश्चाल्लभतेसारमुत्तमम् ॥ तथैवपंचकोशेषुमनः संक्रामयन्क्रमात् ॥ ३० ॥ तेषांमध्येततःसारमात्मानमपिविंदति ॥३१॥ एवंमनःसमाधायसंयतोमनसिद्विजः ॥ अथप्रवर्तयेच्चित्तंनिराकारेपरात्मनि ॥ ३२ ॥ ततोमनःप्रगृह्णातिपरात्मानंहिकेवलम् ॥

यमननेनस्थिरीकृत्य । अथानंतरंद्विजःनिराकारेपरमात्मनिनिदिध्यासनेनचित्तं प्रवर्तयेत्। कीदृशोद्विजः मनसिसंयतोमनोनिग्रहवानित्यर्थः ॥३२॥ ततइति॥ मनःकेवलंपरमात्मानंप्रगृण्हातिवृत्त्याभिव्याप्नोतीत्यर्थः। कीदृशं अद्रेश्यादिश्रु

तितात्पर्यविषयीभूतमित्यर्थः ॥३३॥ एवंपंचकोशविवरणेनाद्वयब्रह्मप्राप्तिंश्रुत्वाच मत्कृतोरामोभगवंतमाह ॥भगवन्निति ॥ श्रवणेजनानैवप्रवर्तंतएतत्कथम् ३४

यत्तदद्रेश्यमग्राह्यमस्थूलाद्युक्तिगोचरम् ॥ ३३ ॥ श्रीरामउवाच ॥ भगवन्श्रवणेनैवप्रवर्तंतेजनाःकथम् ॥ वेदशास्त्रार्थसंपन्नायज्वानःसत्यवादिनः ॥ ३४ ॥ शृण्वंतोऽपितथात्मानंजानतेनैवकेचन ॥ ज्ञात्वापिमन्वतेमिथ्याकिमेतत्तवमायया ॥ ३५ ॥ श्रीशिवउवा० ॥ एवमेवमहाबाहोनात्रकार्याविचारणा ॥ दैवीह्येषागुणमयीममामायादुरत्यया ॥३६॥ मामेवयेप्रपद्यंतेमायामेतांतरंतिते ॥अभक्तायेमहाबाहोममश्रद्धाविवर्जिताः ॥ ३७ ॥ फलंकामयमानास्तेचैहिकामुष्मिकादिकम् ॥

केचनशृण्वंतोऽपिनजानते । केचनपरोक्षतयात्मानंज्ञात्वापिमिथ्याभूतमेतन्मन्वते नाद्रियंतइत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ सएवेति ॥ नान्यकर्माणीति ॥ काम्यानिषिद्धानिकर्माणि । एवंबहुजन्मसुकृतयामद्भक्त्याज्ञानंप्राप्यतइतिभावः । " बहूनांजन्मनामंतेज्ञानवान्मांप्रपद्यते " इतिस्मृतेः ॥ ४१ ॥ ततःसर्वमिति ॥ यतःकारणाद

क्षयिष्णवल्पंसातिशयंततःकर्मफलंमतम् ॥ ३८ ॥ तदविज्ञायकर्माणियेकुर्वंतिनराधमाः ॥ मातुःपतंतितेगर्भेमृत्योर्वक्रेपुनःपुनः ॥ ३९ ॥ नानायोनिषुजातस्यदेहिनोयस्यकस्यचित् ॥ कोटिजन्मार्जितैःपुण्यैर्मयिभक्तिःप्रजायते ॥ ४० ॥ सएवलभतेज्ञानंमद्भक्तःश्रद्धयान्वितः ॥ नान्यकर्माणिकुर्वाणोजन्मकोटिशतैरपि ॥ ४१ ॥ ततःसर्वंपरित्यज्यमद्भक्तिंसमुदाहर ॥ ४२ ॥

नेककोटिजन्मार्जितैःसुकृतैर्मद्भक्तिःप्राप्यते ततःकारणान्मद्भक्तिंसमुदाहरकुरु । यद्वासतांमध्येदक्षिणंबाहुमुद्धृत्य भगवद्भक्तोनप्रणश्यतीतिप्रतिजानीहीत्यर्थः ।

"कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति" इतिस्मृतेः ॥ ४२ ॥ सर्वधर्मानिति ॥ अहमिदमनयाकामनयाकरोमीतिकर्तृत्वाध्यासफलाभिसंधिपूर्वकंसर्वधर्मान्परित्यज्यमामेकंसर्वेश्वरंसर्वजीवनियंतारंशरणंव्रज । शरणत्वंतु । "तस्यैवाहंममैवासौसएवाहमितित्रिधा । भगवच्छरणत्वंस्यात्साधनाभ्यासपाकतः"

सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः॥ ४३ ॥ यत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिरामत्वंतत्कुरुष्वमदर्पणम् ॥ ततःपरतरंनास्तिभक्तिर्मयिरघूत्तम ॥ ४४ ॥

इति । एवंमांशरणमागतंत्वांसर्वपापेभ्यःशरीरत्रयाध्यासतत्कार्यजननमरणनानागतिरूपेभ्योमोक्षयिष्यामि । माशुचः कथंमुक्तोभविष्यामीतिवृथाशोकंमाकृथाइत्यर्थः ॥ ४३ ॥ सर्वंकर्ममदर्पणंकुर्वित्याह ॥ यत्करोषीत्यादि ॥ ततःमद

र्पणादन्यत्साधनंपरतरंश्रेष्ठंनास्ति । मयिसर्वकर्मसमर्पणमेवभक्तिशब्दार्थः । हरे
घूत्तम ॥ ४४ ॥ इतिश्रीलक्ष्मीनरहरिसूनुहरिदीक्षितकृतौ शिवगीताटीकायांबा
लानंदिन्यांचतुर्दशोऽध्यायः ॥ १४ ॥ भक्तेरेवांतरभेदान्प्रपंचयितुंपंचदशोऽध्या

इतिश्रीपद्मपुराणेशिवगीता० श्रीशिवराघवसंवादेचतुर्दशोऽध्यायः ॥
॥१४॥ ॥ श्रीरामउवाच ॥ भक्तिस्तेकीदृशीदेवजायतेवाकथंचसा ॥ य
यानिर्वाणरूपंतुलभतेमोक्षमुत्तमम् ॥ तद्ब्रूहिगिरिजाकांतप्राप्यतेयेननि
र्वृतिः ॥१॥ श्रीभगवानुवाच ॥ योवेदाध्ययनंयज्ञंदानानिविविधानि
च ॥ मदर्पणधियाकुर्यात्समेभक्तःसमेप्रियः ॥२॥ नर्यंभस्मसमादायवि
शुद्धंश्रोत्रियालयात् ॥ अग्निरित्यादिभिर्मंत्रैरभिमंत्र्ययथाविधि ॥३॥

यआरभ्यते । तत्रादितःसार्धश्लोकाष्टकंस्पष्टार्थम् । कीदृशीकिंविधा । निर्वाणरू
पंकैवल्यरूपम् । निर्वृतिःसुखम् ॥ १ ॥ २ ॥ नर्यंभस्माग्निहोत्रभस्म ॥ ३ ॥

॥४॥ ५ ॥ ६ ॥ ७ ॥८॥ अन्यत्रेति ॥ कठवल्लीषुनाचिकेतसंप्रतिब्रह्मप्राप्तिसाधनानांमध्येश्रेष्ठतमंओमित्येतदालंबनंमृत्युनोपदिष्टंतत्प्रतिपादयति। धर्मादन्यत्र

उद्धूलयतिगात्राणितेनचार्चतिमामपि॥तस्मात्परतराभक्तिर्ममराम नविद्यते ॥४॥ सर्वदाशिरसाकंठेरुद्राक्षान्धारयेत्तुयः ॥ पंचाक्षरीजपपरःसमेभक्तःसमेप्रियः ॥ ५ ॥ भस्मच्छन्नोभस्मशायीसर्वदाविजितेंद्रियः ॥ यस्तुरुद्रंजपेन्नित्यंचिंतयेन्मामनन्यधीः ॥ ६ ॥ सतेनैवचदेहेनशिवःसंजायतेस्वयम् ॥ जपेद्योरुद्रसूक्तानितथाथर्वशिरःपरम् ॥७॥ कैवल्योपनिषत्सूक्तंश्वेताश्वतरमेवच ॥ ततःपरतरोभक्तोममलोकेनविद्यते॥८॥अन्यत्रधर्मादन्यस्मादन्यत्रास्मात्कृताकृतात् ॥ अन्यत्रभूताद्भव्याच्चयत्प्रवक्ष्यामितच्छृणु ॥ ९ ॥

धर्मविलक्षणमित्यर्थः। अन्यस्माद्धर्माच्चविलक्षणम्। तथाकृताकृतात्कार्यकार

णादन्यद्भूताद्भव्याच्चकालादन्यत् । कालत्रयापरिच्छिन्नमित्यर्थः । ईदृशंवस्तुव
क्ष्यामितच्छृणु ॥ ९ ॥ वदंतीति ॥ पदंपदनीयंयद्वस्तुवेदावदंतितत्पदंप्रवक्ष्या
मीत्यन्वयः । छांदसंरूपम् ॥ १० ॥ ११ ॥ एतदेवाक्षरंब्रह्मसगुणंनिर्गुणंच । एत

वदंतियत्पदंवेदाःशास्त्राणिविविधानिच ॥ सर्वोपनिषदांसारंदध्नो
घृतमिवोद्धृतम् ॥ १० ॥ यदिच्छंतोब्रह्मचर्यंचरंतिमुनयःसदा ॥ तत्ते
पदंसंग्रहेणप्रब्रविष्यामियत्पदम् ॥ ११ ॥ एतदेवाक्षरंब्रह्मएतदेवाक्ष
रंपरम् ॥ एतदेवाक्षरंज्ञात्वाब्रह्मलोकेमहीयते ॥ १२ ॥ छंदसांयस्तुधेनू
नामृषभत्वेनचोदितः ॥ इदमेवपतिःसेतुरमृतस्यचधारणात् ॥ १३ ॥

देवाक्षरंज्ञात्वाब्रह्मत्वेनोपास्यब्रह्मलोकेमहीयते । तत्रब्रह्मणासहकैवल्यंप्राप्नो
तीतिभावः ॥ १२ ॥ छंदसामिति ॥ छंदसांवेदरूपाणांधेनूनांऋषभत्वेनयःश्रु
तावुक्तः । " यश्छंदसामृषभोविश्वरूपः " इत्यादितैत्तिरीयश्रुतेः । इदमेवाक्षरं

पतिःनियामकः। संसारस्यसेतुरिवसेतुःमोक्षस्यधारणाच्चसेतुः ॥ १३ ॥ मेद
सामांसविशेषेणपिहितेकोशेहृदयब्रह्मरूपेयत्परंब्रह्मओमितितद्भावयतोममभक्त
स्यक्रमेणमुक्तिर्भविष्यतीतिभावः ॥ १४ ॥ चतस्रइति॥ तस्यप्रणवस्यअकारउ

मेदसापिहितेकोशेब्रह्मयत्परमोमिति ॥ १४ ॥ चतस्रस्तस्यमात्रा
स्युरकारोकारकौतथा ॥ मकारश्चावसानेऽर्धमात्रेतिपरिकीर्तिता
॥ १५ ॥ पूर्वत्रभूश्चऋग्वेदोब्रह्माष्टवसवस्तथा ॥ गार्हपत्यश्चगाय
त्रीगंगाप्रातःसवस्तथा ॥ १६ ॥ द्वितीयातुभुवोविष्णूरुद्रोऽनुष्टुब्य
जुस्तथा ॥ यमुनादक्षिणाग्निश्चमध्यंदिनसवःस्मृतः ॥ १७ ॥

कारोमकारश्च। अवसानेचतुर्थीअर्धमात्रेत्यर्थः। यद्यपिनेदंव्याकरणानुगुणंतथा
प्यागमानुगुणमस्तीतिज्ञेयम् ॥ १५ ॥ चतसृणांमात्राणांप्रत्येकंभूरादयोदेवता
ध्येयाः ॥ १६ ॥ १७ ॥

॥ १८ ॥ १९ ॥ २० ॥ तासांरूपाण्याह ॥ प्रथमेति ॥ शुक्लवर्णिनीति न
कर्मधारयान्मत्वर्थीयाइतितुप्रायिकम् ॥ २१ ॥ जातमिति ॥ विश्वंसर्वंभुवनं

तृतीयाचसुवःसामान्यादित्यश्चमहेश्वरः ॥ अग्निराहवनीयश्चजग
तीचसरस्वती ॥ १८ ॥ तृतीयंसवनंप्रोक्तमथर्वत्वेनयन्मतम् ॥
चतुर्थीयावसानेऽर्धमात्रासासोमलोकगा ॥ १९ ॥ अथर्वांगिरसः
संवर्तकोऽग्निश्चमहस्तथा ॥ विराट्सभ्यावसथ्यौचशुतुद्रियज्ञपुच्छ
कः ॥२०॥ प्रथमारक्तवर्णास्याद्वितीयाभास्वरामता ॥ तृतीयाविद्यु
दाभासाचतुर्थीशुक्लवर्णिनी ॥२१॥ जातंचजायमानंचतदोंकारेप्र
तिष्ठितम् ॥ विश्वंभूतंचभुवनंविचित्रंबहुधातथा ॥२२॥ जातंचजाय
मानंयत्तत्सर्वंरुद्रउच्यते ॥ तस्मिन्नेवपुनःप्राणःसर्वमोंकारउच्यते२३

जातंजायमानंच ॐ कारेप्रतिष्ठितम् ॥ २२ ॥ रुद्रप्रणवयोरभेदमाह ॥ जात

मिति ॥ २३ ॥ २४ ॥ २५ ॥ अग्निहोत्रंविनायाहोमशालातदीयाग्नेः ॥ २६ ॥

प्रविलीनंतदोंकारेपरंब्रह्मसनातनम् ॥ तस्मादोंकारजापीयःसमुक्तोनात्रसंशयः ॥ २४ ॥ त्रेताग्नेःस्मार्तवह्नेर्वाशैवाग्नेर्वासमाहितम् ॥ भस्माभिमंत्र्ययोमांतुप्रणवेनप्रपूजयेत् ॥ तस्मात्परतरोभक्तोममलोकेनविद्यते ॥ २५ ॥ शालाग्नेर्दावबह्नेर्वाभस्मानीयाभिमंत्रितम् ॥ योविलिंपतिगात्राणिसशूद्रोपिविमुच्यते ॥ २६ ॥ कुशपुष्पैर्बिल्वदलैःपुष्पैर्वागिरिसंभवैः ॥ योमामर्चयतेनित्यंप्रणवेनप्रियोहिसः ॥ २७ ॥ पुष्पंफलंसमूलंवापत्रंसलिलमेववा ॥ योदद्यात्प्रणवैर्मह्यंतत्कोटिगुणितंभवेत् ॥ २८ ॥ अहिंसासत्यमस्तेयंशौचमिंद्रियनिग्रहः ॥

कुशपुष्पैस्तन्मंजरीभिरित्यर्थः ॥ २७ ॥ प्रणवैरावृत्तियुक्तैरित्यर्थः ॥ २८ ॥ अहिंसानिषिद्धहिंसावर्जनम् ॥ २९ ॥

विलीयतेसायुज्यमाप्नोति ॥ ३० ॥ ३१ ॥ ३२ ॥ पंचामृतैःगोदुग्धदधिसर्पिर्म

यस्यास्त्यध्ययनंनित्यंसमेभक्तःसमेप्रियः ॥ २९ ॥ प्रदोषेयोममस्था
नंगत्वापूजयतेतुमाम् ॥ सपरांश्रियमाप्नोतिपश्चान्मयिविलीयते ३०
अष्टम्यांचचतुर्दश्यांपर्वणोरुभयोरपि ॥ भूतिभूषितसर्वांगोयःपूजय
तिमांनिशि ॥ कृष्णपक्षेविशेषेणसमेभक्तःसमेप्रियः ॥ ३१ ॥ एकादश्या
मुपोष्यैवयःपूजयतिमांनिशि ॥ सोमवारेविशेषेणसमेभक्तोननश्यति
॥ ३२ ॥ पंचामृतैःस्नापयेद्यःपंचगव्येनवापुनः ॥ पुष्पोदकैःकुशजलै
स्तस्मान्नान्यःप्रियोमम ॥ ३३ ॥ पयसासर्पिषाचापिमधुनेक्षुरसेनवा ॥
पक्वाम्रफलजेनापिनारिकेलजलेनवा ॥ ३४ ॥ गंधोदकेनवामांयोरुद्र
मंत्रंसमुच्चरन् ॥ अभिषिंचेत्ततोनान्यःकश्चित्प्रियतमोमम ॥ ३५ ॥

धुशर्कराभिः पंचगव्यैर्मधुशर्करास्थानेगोमूत्रगोमयेयोज्ये ॥ ३३ ॥ ३४ ॥ ३५ ॥

॥ ३६ ॥ बृहद्रथंतरादयःसामभेदाः ॥ ३७ ॥ ३८ ॥ ३९ ॥ रघुकुलश्रेष्ठ । अमर्त्यो मरणधर्मरहितः । प्रवाहरूपेणानित्यइतियावत् ॥४०॥ इतिश्रीशिवगीताटीकायांपंचदशोऽध्यायः ॥ १५ ॥

आदित्याभिमुखोभूत्वाह्यूर्ध्वबाहुर्जलेस्थितः ॥ मांध्यायन्रविबिंबस्थमथर्वांगिरसंजपेत् ॥ ३६ ॥ प्रविशेन्मेशरीरेऽसौगृहंगृहपतिर्यथा ॥ बृहद्रथंतरंवामदेव्यंदेवव्रतानिच ॥ ३७ ॥ तद्योगयाज्यदेहांश्चयोगायातिममाग्रतः ॥ इहश्रियंपरांभुक्त्वाममसायुज्यमाप्नुयात् ॥३८॥ ईशावास्यादिमंत्रान्योजपेन्नित्यंममाग्रतः ॥ मत्सायुज्यमवाप्नोतिममलोकेमहीयते॥३९॥ भक्तियोगोमयाप्रोक्तएवंरघुकुलोद्वह॥ सर्वकामप्रदोऽमर्त्यःकिमन्यच्छ्रोतुमिच्छसि॥४०॥ इतिश्रीपद्मपुराणे० ब्रह्मवि० श्रीशिवरा० भक्तियोगोनामपंचदशोऽध्यायः१५

अस्मिन्नुपनिषत्सारभूते गीताशास्त्रे केऽधिकारिणः केनाधिकारिण इति जिज्ञासुः श्रीरामो भगवंतमाह ॥ भगवन्निति॥१॥ एवंपृष्टोभगवानुवाच॥ ब्रह्मक्षत्रेति ॥ स्त्रीशूद्रयोःसाक्षाच्छ्रवणाधिकारोनास्तिकिंतुब्राह्मणमग्रतःकृत्वा।"श्रावयेच्चतुरोव र्णान्कृत्वाब्राह्मणमग्रतः" इतिस्मृतेः। सोऽपिस्मृतावेवनश्रुतावधिकारइतिसिद्धां

श्रीरामउवाच ॥ भगवन्मोक्षमार्गोयस्त्वयासम्यगुदाहृतः॥
तत्राधिकारिणंब्रूहितत्रमेसंशयोमहान् ॥ १ ॥ श्रीभगवानु
वाच ॥ ब्रह्मक्षत्रविशःशूद्राःस्त्रियश्चात्राधिकारिणः॥ ब्रह्मचा
रीगृहस्थोवाऽनुपनीतोऽथवाद्विजः ॥ २ ॥

तः। शूद्रस्यतदनादरश्रवणात्तच्छ्रवणात्सूच्यतेहीतिन्यायोऽत्रानुसंधेयः।तथागृह स्थस्याप्यधिकारोऽस्ति । यद्यपिभाष्यकारैस्तथानृसिंहाश्रमपादैश्चयतीनामेवा धिकारःप्रतिपादितस्तथापिविरक्तस्यगृहस्थस्याप्यधिकारोऽस्ति । " अभयंवै

जनकप्राप्नोति तदात्मानंवेदाहंब्रह्मास्मि" इतिश्रुतेः। अनुपनीतस्यापियोग्यत याद्विजत्वादधिकारोऽस्ति । सयदिबुद्धिमांश्चेच्छिक्षार्थंगीताशास्त्रंपाठनीयइति भावः ॥२॥ अवनस्थोविधुरः ॥ ३ ॥ अथानधिकारिणआह ॥ जडइति ॥ ज

वनस्थोवाऽवनस्थोवायतिःपाशुपतव्रती ॥ बहुनात्रकि
मुक्तेनयस्यभक्तिःशिवार्चने ॥ ३ ॥ सएवात्राधिकारी
स्यान्नान्यचित्तःकथंचन ॥ जडोंऽधोबधिरोमूकोनिःशौ
चःकर्मवर्जितः ॥४॥ अज्ञोपहासाभक्ताश्चभूतिरुद्राक्षधा
रिणः ॥ लिंगिनोयश्चवाद्वेष्टितेनैवात्राधिकारिणः ॥ ५॥

डोमूर्खःनिःशौचोविहिताचारविहीनः। कर्मविवर्जितोविहितकर्मरहितः ॥ ४ ॥ अज्ञेष्वनुग्रहयोग्येषूपहासतत्परा अज्ञोपहासाउच्यंते तेचतेअभक्ताश्च । यद्वा अज्ञोपहासाश्चाभक्ताश्चेतिद्वंद्वः । तथाभूतिरुद्राक्षधारिणोलिंगिनःपाशुपतव्रति

नोयोद्वेष्टि। तेसर्वेऽत्रनैवाधिकारिणःस्युरितिशेषः॥५॥योमामिति॥ मांमहेश्वरं गुरुंब्रह्मोपदेष्टारंतथापाशुपतव्रतंतथाविष्णुंचयोद्वेष्टि सजन्मनांकोटिशतैरपिनमुच्येत। तदुक्तंबृहन्नारदीये।"अनादिनिधनेदेवेहरिशंकरसंज्ञिते। अज्ञानसागरे मग्नाभेदंकुर्वीतिपापिनः॥ वायुपुराणे॥ ब्रह्मनारायणौपूर्वैरुद्रःकल्पांतरेपुरा। कल्पांतरेतथाब्रह्मारुद्रविष्णूजजानह॥ विष्णुःकल्पांतरेतद्वद्ब्रह्माणमसृजत्पुनः। नाराय

योमांगुरुंपाशुपतंव्रतंद्वेष्टिनराधिप॥ वि
ष्णुंवासनमुच्येतजन्मकोटिशतैरपि॥ ६॥

णंपुनर्ब्रह्माब्रह्माणंचपुनर्भवः॥एवंकल्पेषुबहुषुब्रह्मविष्णुमहेश्वराः। परस्परस्माज्जायंतेपरस्परजयैषिणः॥ अयंपरस्त्वयंनेतिसंरंभाभिनिवेशिनः। यातुधानाभवंत्येवपिशाचाश्चनसंशयः॥ बृहन्नारदीये। युगांतेजगदत्त्येतद्रुद्ररूपधरोहरिः। रुद्रोवैविष्णुरूपेणपालयत्यखिलंजगत्॥हरिरूपधरंलिंगंलिंगरूपधरोहरिः॥ईषद

प्यंतरंनास्तिभेदकृत्पापमश्नुते ॥ हरिवंशे । अहंत्वंसर्वगोदेवस्त्वमेवाहंजनार्दन । आवयोरंतरंनास्तिशब्दैरर्थैर्जगत्पते ॥ त्वदुपासाजगन्नाथसैवास्तांममगोपते । यश्चत्वांद्वेष्टिगोविंदसमांद्वेष्टिनसंशयः ॥ एवंकोटिशःप्रमाणेषुसत्सुमाध्वाःकाटरमाठरादिश्रुतिस्मृतिकल्पकाःशिवंनिंदंति । तथाशैवपाषंडिनोविष्णुंनिंदंति तेउभयेऽपिनरकेषुनिपतंतीतिदिक् ॥६॥ अनेकेति ॥ अनेकेषुकाम्यकर्मस्वासक्ताः ॥ "या

**अनेककर्मसक्तोऽपिशिवज्ञानविवर्जितः ॥ शिवभक्तिविहीनश्चसंसारीनैवमुच्यते ॥ ७ ॥ आसक्ताःफलसंगेनयेत्ववैदिककर्मणि ॥**

मिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः । इत्युपक्रम्य भोगैश्वर्यप्रसक्तानांतयापहृतचेतसाम् । व्यवसायात्मिकाबुद्धिःसमाधौनविधीयते " इतिस्मृतेः ॥ ७ ॥ अवैदिकेषुवामपाशुपतपंचरात्राद्यागमोक्तकर्मणि मद्यमांसमैथुनत्रिशूलाद्यंकनरूपे दृष्टमात्रंपूजासत्कारादिरूपंफलंयेषांतेतथोक्तास्तेमुक्तौनाधिकारिणः । अयं

भावः । शाक्ताःशैवाःवैष्णवाश्चद्विविधाः । वैदिकाअवैदिकाश्चेति । वैदिकशाक्ता
नांमंत्रमुद्रायंत्रपूजादिकमागमोक्तंयुक्तंसर्वमेव । " विप्राःक्षोणिभुजोविशस्तदि
तरेक्षीराज्यमध्वासवैः " इत्युक्तत्वात् । मद्यमांसादिकंतुशूद्रादिसंकरजातीया
नामेव द्विजानांतुनरकसाधनम् । तथापाशुपतानामपिविभूतिरुद्राक्षधारणपंचा
क्षरीजपादिनाशिवभक्तिर्विष्णुभक्तिश्चमोक्षसाधनम् । विष्णुभक्तानांऊर्ध्वपुंड्रधा

दृष्टमात्रफलास्तंतुनमुक्तावधिकारिणः ॥ ८ ॥ अविमुक्तेद्वारका
यांश्रीशैलेपुंडरीकके ॥ देहांतेतारकंब्रह्मलभतेमदनुग्रहात् ॥ ९ ॥

रणद्वितीयैकादश्युपवासादिनाविष्णुभक्तिःशिवभक्तिश्चमोक्षसाधनम् । अन्यथा
नरकसाधनमेवेतिदिक् ॥ ८ ॥ क्षेत्राण्यपिमोक्षसाधनानिसंतीत्याह ॥ अविमु
क्तइति॥ अविमुक्तंकाशीपुंडरीकंव्याघ्रपुरंउक्तेषुचतुर्षुक्षेत्रेषुस्थितोऽधिकारी तार
कंप्रणवपूर्वकंमहावाक्योपदेशंममानुग्रहाल्लभते । अत्रयद्यप्यविशेषेणतारकंल

भतइत्युक्तंतथाप्यविमुक्तेजंतुमात्रस्यतारकोपदेशः । तत्रापिपापिनांभैरवयातनानंतरमुपदेशः। "यातनांतेदिशेन्मतिम्" इतिवचनात् । निष्पापानांतुप्राणोत्क्रमणकालएवोपदेशः । द्वारकादिक्षेत्रांतरेषुतु सन्मार्गनिष्ठानामुत्तमाधिकारिणांमरणकालएवोपदेशः। पापिनांतुजन्मांतरेकाशीप्राप्तिद्वारेतिसिद्धांतः। विस्तरस्तुभट्टोजिदीक्षितीयव्याख्यानेद्रष्टव्यः॥ ९ ॥ काश्यादिक्षेत्रेषुकथंवर्तितव्य

यस्यहस्तौचपादौचमनश्चैवसुसंयतम् ॥ विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते ॥ १० ॥ विप्रस्यानुपनीतस्यविधिरेवमुदाहृतः ॥

मित्याकांक्षायामाह ॥ यस्येति ॥ हस्तादिकंयस्यसुसंयतंसम्यक्निगृहीतम्। विद्यादीनांत्रयाणांनिग्रहस्तुदंभराहित्यमेव सःतीर्थवासोक्तंफलमश्नुते । अन्यथानेतिभावः। तदुक्तंकाशीखंडे । "अशनंव्यसनंवासःकाश्यांयेषाममार्गतः। कीकटेनसमाकाशीगंगाप्यंगारवाहिनी" इति ॥ १० ॥ अनुपनीतोऽप्यधिकारीति

प्रागुक्तंतत्रविशेषमाह ॥ विप्रस्येति ॥ एवंवक्ष्यमाणरीत्याविधिरुदाहृतः। तमे वाह। वेदंनोच्चारयेत् स्वधानिनयनात् ऋते विनेत्यर्थः। "कृतचौलस्तुकुर्वीतउ दकंपिंडमेवच। स्वधाकारंप्रयुंजीतवेदोच्चारंनकारयेत् " इतिव्याघ्रपादवचना त्। स्मृतिपाठेत्वधिकारोऽस्त्येवेतिदिक् ॥ ११ ॥ सोऽनुपनीतस्तावच्छूद्रेणस

नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृते ॥ ११ ॥ सच्छूद्रेणसमस्ता वद्यावद्वेदान्नजायते ॥ नामसंकीर्तनेध्यानेसर्वएवाधिकारिणः १२ संसारान्मुच्यतेजंतुःशिवतादात्म्यभावनात् ॥ यथादानंतपोवेदा ध्ययनंचान्यकर्मवा ॥ सहस्रांशंतुनार्हतिसर्वदाध्यानकर्मणः॥१३॥

मो यावत्पर्यंतंवेदान्नजायतेसावित्रंजन्मनप्राप्नोतीत्यर्थः। तथाच स्त्रीशूद्रानुपनी तादीनांपुराणादिश्रवणादिनायथायथंज्ञानंसंभवतीतिभावः ॥ १२ ॥ ध्यानस्य श्रेष्ठत्वमाह ॥ संसारादिति ॥ तादात्म्यंशिवोऽहमस्मीत्यैक्यंतस्यभावनात्।

यथायथावत् यथाविधीत्यर्थः । क्रियमाणंदानादि ध्यानस्यसहस्रांशं नार्हति ॥१३॥ जातिमिति ॥ ब्राह्मणत्वादिजातिंब्रह्मचर्याद्याश्रमंअंगानिन्यासविधिंदे शंपुण्यगिर्यादिरूपंकालंप्रातःकालादिं आसनादीनिशिखाबंधनोपस्पर्शनादिक र्माणि ध्यानंकर्तृ नापेक्षते ॥ १४ ॥ यथाकामंध्यानंकर्तव्यमित्याह ॥ गच्छन्निति

जातिमाश्रममंगानिदेशंकालमथापिवा ॥ आसनादीनिकर्मा णिध्यानंनापेक्षतेक्वचित् ॥ १४ ॥ गच्छंस्तिष्ठन्चरन्वापिश यानोवान्यकर्मणि ॥ पातकेनापियुक्तोवाध्यानादेवविमुच्य ते ॥ १५ ॥ नेहाभिक्रमनाशोऽस्तिप्रत्यवायोनविद्यते ॥

ति ॥ १५ ॥ नेहेति ॥ इहध्यानेऽभिक्रमस्यारंभस्यनाशोविघ्नोनास्ति । प्रत्य वायश्चनविद्यते । “ नित्यकर्मपरित्यज्यवेदांतश्रवणंविना वर्तमानस्तुसंन्यासी पतत्येवनसंशयः” इतिस्मृतिरन्यत्रविस्तरा । अस्यनिदिध्यासनरूपस्यधर्मस्य

संबंधिस्वल्पमपिध्यानैकदेशोऽपि महतःसंसारभयात्त्रायते निःशेषप्रतिबंधक निवृत्तौतत्रैववविमुच्यते सतिप्रतिबंधकेजन्मांतरेमुक्तोभवति। तदुक्तंभगवद्गीतासु।

स्वल्पमप्यस्यधमस्यत्रायतेमहतोभयात् ॥ १६ ॥ आश्चर्येवाभयेशोकेक्षुतेवाममनामयः ॥ व्याजेनापिस्मरेन्मर्त्यःसयातिपरमांगतिम् ॥ १७ ॥ महापापैरपिस्पृष्टोदेहांतेयस्तुमांस्मरेत् ॥ पंचाक्षरींवोच्चरतिसमुक्तोनात्रसंशयः ॥ १८ ॥ विश्वंशिवमयंयस्तुपश्यन्नात्मानमात्मना ॥ तस्यक्षेत्रेषुतीर्थेषुकिंकायैंवान्यकर्मसु ॥ १९ ॥ सर्वेणसर्वदाकार्यंभूतिरुद्राक्षधारणम् ॥ युक्तेनाथाप्ययुक्तेनशिवभक्तिमभीप्सता ॥ २० ॥

तत्रतंबुद्धिसंयोगंलभतेपौर्वदेहिकम् । यततेचततोभूयःसंसिद्धौकुरुनंदन " इति । तस्माद्ध्यानेनमुक्तोभवतीतिनिष्कर्षः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

नर्यंभस्मेति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

नर्यंभस्मसमायुक्तोरुद्राक्षान्यस्तुधारयेत् ॥ महापापैरपिस्पृष्टोमु च्यतेनात्रसंशयः ॥ २१॥ अन्यानिशैवकर्माणिकरोतुनकरोतुवा ॥ शिवनामजपेद्यस्तुसर्वदामुच्यतेतुसः ॥ २२॥ अंतकालेतुरुद्राक्षान् विभूतिंधारयेत्तुयः ॥ महापापोपपापौघैरपिस्पृष्टोनराधमः ॥ २३ ॥ सर्वथानोपसर्पंतितंजनंयमकिंकराः ॥ २४ ॥ बिल्वमूलमृदायस्तु शरीरमुपलिंपति ॥ अंतकालेंऽतकजनैःसदूरीक्रियतेनरः ॥ २५ ॥ श्रीरामउवाच ॥ भगवन्पूजितःकुत्रकुत्रवात्वंप्रसीदसि ॥ तद्ब्रूहिम मजिज्ञासावर्ततेमहतीविभो ॥ २६ ॥ श्रीभगवानुवाच ॥ मृदावा गोमयेनापिभस्मनाचंदनेनवा ॥ सिकताभिर्दारुणावापाषाणेना पिनिर्मिता ॥ लोहेनवाथरंगेणकांस्यखर्परपित्तलैः ॥ २७ ॥

ताम्ररौप्येति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

ताम्ररौप्यसुवर्णैर्वारत्नैर्नानाविधैरपि ॥ अथवापारदेनैवकर्पूरेणा
थवाकृता ॥२८॥ प्रतिमाशिवलिंगंवाद्रव्यैरेतैःकृतंतुयत् ॥ तत्रमांपू
जयेत्तेषुफलंकोटिगुणोत्तरम् ॥ २९ ॥ मृद्दारुकांस्यलोहैश्चपाषाणे
नापिनिर्मिता ॥ गृहिणाप्रतिमाकार्याशिवंशश्वदभीप्सता ॥ ३० ॥
आयुःश्रियंकुलंधर्मंपुत्रानाप्नोतितैःक्रमात् ॥ बिल्ववृक्षेतत्फलेवा
योमांपूजयतेनरः ॥ ३१ ॥ परांश्रियमिहप्राप्यममलोकेमहीयते
बिल्ववृक्षंसमाश्रित्ययोमंत्रान्विधिनाजपेत् ॥ ३२ ॥ एकेनदिवसे
नैवतत्पुरश्चरणंभवेत् ॥ यस्तुबिल्ववनेनित्यंकुटींकृत्वावसेन्नरः
॥ ३३ ॥ सर्वेमंत्राःप्रसिद्ध्यंतिजपमात्रेणकेवलम् ॥ पर्वताग्रेनदीती
रेबिल्वमूलेशिवालये ॥ ३४ ॥

॥३५॥३६॥ ३७ ॥ आत्मपूजेति ॥ ममहृदयेपरमात्मास्तीतिमत्वा यद्यत्स्वभो



अग्निहोत्रेकेशवस्यसन्निधौचजपेत्तुयः ॥ नैवास्यविघ्नंकुर्वंतिदान
वायक्षराक्षसाः॥३५॥ तंनस्पृशंतिपापानिशिवसायुज्यमृच्छति॥
स्थंडिलेवाजलेवह्नौवायावाकाशएववा ॥ ३६ ॥ गिरौस्वात्मनि
वायोमांपूजयेत्प्रयतोनरः॥ सकृत्स्नंफलमाप्नोतिलवमात्रेणराघव
॥३७॥ आत्मपूजासमानास्तिपूजारघुकुलोद्वह ॥ मत्सायुज्यमवा
प्नोतिचंडालोऽप्यात्मपूजया ॥३८॥ सर्वान्कामानवाप्नोतिमनुष्यः
कंबलासने ॥ कृष्णाजिनेभवेन्मुक्तिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ ३९ ॥

गायगृण्हातितत्सर्वंतस्मैनिवेद्यस्वयंगृण्हाति तद्भयेनचपापादिकंनाचरति सात्म
पूजा ॥ ३८॥ ३९ ॥

कुशासनइति ॥ पत्रंकोमलपत्रम् ॥४०॥४१॥४२॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

कुशासनेभवेज्ज्ञानमारोग्यंपत्रनिर्मिते॥पाषाणेदुःखमाप्नोतिकाष्ठे नानाविधान्गदान् ॥ ४० ॥ वस्त्रेश्रियमवाप्नोतिभूमौमंत्रोनसिध्यति ॥ उदङ्मुखःप्राङ्मुखोवाजपंपूजांसमाचरेत् ॥ ४१ ॥ अक्षमालाविधिंवक्ष्येशृणुष्वावहितोनृप॥साम्राज्यंस्फाटिकोदद्यात्पुत्रजीवःपरांश्रियम् ॥ ४२ ॥ आत्मज्ञानंकुशग्रंथीरुद्राक्षाःसर्वकामदाः ॥ प्रवालैःश्चकृतामालासर्वलोकवशप्रदा ॥ ४३ ॥ मोक्षप्रदाचमालास्यादामलक्याःफलैःकृता ॥ मुक्ताफलैःकृतामालासर्वविद्याप्रदायिनी ॥ ४४ ॥ माणिक्यरचितामालात्रैलोक्यस्यवशंकरी ॥ नीलैर्मरकतैर्वापिकृताशत्रुभयप्रदा ॥ ४५ ॥ सुवर्णरचितामालादद्याद्वैमहतींश्रियम् ॥ तथारौप्यमयीमालाकन्यांयच्छतिकामिताम् ॥ ४६ ॥

॥४७॥ शतसंख्योत्तमेतिप्रागुक्तंतदनुवादेनगुणविशेषणंविधत्तेयदिस्याच्छतानि र्मितेत्यादिना॥ ४८॥ ४९ ॥ अकारादिळकारांतं पुनर्ळकाराक्षरंमेरुंकृत्वाजपेत् ।

उक्तानासर्वकामानांदायिनीपारदैःकृता ॥ अष्टोत्तरशतंमाला तत्रस्याद्युत्तमोत्तमा ॥ ४७॥ शतसंख्योत्तमामालापंचाशन्म ध्यमामता ॥ चतुःपंचाशतायद्वाप्यधमासप्तविंशतिः ॥ ४८ ॥ अधमापंचविंशत्यायदिस्याच्छतनिर्मिता ॥ पंचाशदक्षराण्य त्रानुलोमप्रतिलोमतः ॥ ४९ ॥ इत्येवंस्थापयेत्स्पष्टंनकस्मैचि त्प्रदर्शयेत् ॥ ५० ॥ वर्णैर्विन्यस्तयायस्तुक्रियतेमालयाजपः॥ एकवारेणतस्यैवपुरश्चर्याकृताभवेत् ॥ ५१॥ सव्यपार्ष्णिंगुदेस्था प्यदक्षिणंचशिवोपरि॥योनिमुद्राबंधएवंभवेदासनमुत्तमम् ५२

॥५०॥ वर्णमालाफलमाह॥वर्णैरिति ॥ ५१॥ योनिमुद्राबंधमाह॥ शिवोपरीति ॥

शिवोलिंगंमेढ्रमितियावत् ॥५२॥ यंकंचन नानाविधंदारुणंमंत्रमित्यर्थः। तत्तन्मं

योनिमुद्रासनेस्थित्वाप्रजपेद्यःसमाहितः ॥ यंकंचिदपिवामंत्रंतस्य
स्युःसर्वसिद्धयः ॥ ५३ ॥ छिन्नारुद्धाःस्तंभिताश्चमिलितामूर्छितास्त
था ॥ सुप्तामत्ताहीनवीर्यादग्धत्रस्तारिपक्षगाः ॥ ५४ ॥ बालायौवनम
त्ताश्चवृद्धामंत्राश्चयेमताः ॥ योनिमुद्रासनेस्थित्वामंत्रानेवंविधान्ज
पेत् ॥ ५५ ॥ तस्यसिद्ध्यंतितेमंत्रानान्यस्यतुकथंचन ॥ ब्राह्मंमुहूर्तमा
रभ्यामध्याह्नंप्रजपेन्मनुम् ॥ अतऊर्ध्वंकृतेजाप्येविनाशोभवतिध्रुव
म् ॥पुरश्चर्याविधावेवंसर्वकाम्यफलेष्वपि ॥ ५६ ॥ नित्येनैमित्तिकेवा
पितपश्चर्यासुवापुनः ॥ सर्वदैवजपः कार्योनदोषस्तत्रकश्चन ॥ ५७॥

त्राणांछिन्नादीनांलक्षणानिमंत्रशास्त्रादवगंतव्यानि विस्तरभयान्नेहविलिख्यंते
॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

यस्त्वर्ति ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ शृणुध्वंशृणुयादितिश्रवणाभ्या

यस्तुरुद्रंजपेन्नित्यंध्यायमानोममाकृतिम्॥षडक्षरंवाप्रणवंनिष्का मोनिर्जितेंद्रियः ॥५८॥ तथाथर्वशिरोमंत्रंकैवल्यंवारघूतम ॥ सते नैवचदेहेनशिवःसंजायतेस्वयम् ॥ ५९ ॥ अधीतेशिवगीतांयो नित्यमेतांजपेत्तुयः ॥ शृणुयाद्वासमुक्तःस्यात्संसारान्नात्रसंशयः ॥६०॥ सूतउवाच ॥ एवमुक्त्वामहादेवस्तत्रैवांतरधीयत ॥ रामः कृतार्थमात्मानममन्यततथैवसः ॥ ६१ ॥ एवंमयासमासेनाशिव गीतासमीरिता ॥ एतांयःप्रजपेन्नित्यंशृणुयाद्वासमाहितः ॥ ६२ ॥ एकाग्रचित्तोयोमर्त्यस्तस्यमुक्तिःकरेस्थिता ॥ अतःशृणुध्वंमुनयो नित्यमेतांसमाहिताः ॥ ६३ ॥

सो मुक्त्यभ्यासश्चदार्ढ्याय तत्त्वमसीतिनवकत्वोऽभ्यासवदितिभावः ॥ ६३ ॥

॥ ६४ ॥ ६५ ॥ अद्येति ॥ त्वंहिनःपिता " योऽस्माकमविद्यायाःपारंपारयसि "
इतिश्रुतेर्ब्रह्मप्रदएवपितेतियुक्तम् ॥ ६६ ॥ ६७ ॥ कालांतरेपठितुमागतान्

अनायासेनैवामुक्तिर्भवितानात्रसंशयः ॥ कायक्लेशोमनःक्षोभोध
नहानिर्नचात्मनः ॥ ६४ ॥ नपीडाश्रवणादेवयस्मात्कैवल्यमाप्नु
यात् ॥ शिवगीतामतोनित्यंशृणुध्वमृषिसत्तमाः ॥ ६५ ॥ ऋष
यऊचुः ॥ अद्यप्रभृतिनःसूतत्वमाचार्यःपितागुरुः ॥ अविद्यायाः
परंपारंयस्मात्तारयितासिनः ॥ ६६ ॥ उत्पादकब्रह्मदात्रोर्गरीया
न्ब्रह्मदःपिता ॥ तस्मात्सूतात्मजत्वत्तःसत्यंनान्योऽस्तिनोगुरुः
॥ ६७ ॥ व्यासउवाच ॥ इत्युक्त्वाप्रययुःसर्वेसायंसंध्यामुपासि
तुम् ॥ स्तुवंतःसूतपुत्रंतेसंतुष्टागोमतीतटम् ॥ ६८ ॥

शिष्यान्प्रतिव्यासस्यायमुपदेशइत्यनुमेयमितिसर्वंरमणीयम् ॥ ६८ ॥

योऽभूज्जीवानुद्दिधीर्षुर्दयालुःशिष्योरामोदेशिकःश्रीमहेशः ॥ गीतांतत्त्वज्ञानशास्त्रंजगौयस्तंवंदेऽहंदिव्यलक्ष्मीनृसिंहम् ॥ १ ॥ क्काहंमंदमतिःक्केदंगीताशास्त्रं

इतिश्रीपद्मपुराणेउत्तरखंडेशिवगीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेशिवराघवसंवादेषोडशोऽध्यायः ॥ १६ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ गीताशास्त्रस्यादितःश्लोकसंख्या ॥ ७७० ॥

महत्तरम् ॥ तद्व्याख्यानेप्रवृत्तस्यक्षमध्वंममचापलम् ॥ २ ॥ इतिश्रीलक्ष्मीनरहरिसूनुविरचितायां शिवगीताटीकायां बालानंदिन्यांमोक्षयोगोनाम षोडशोऽध्यायः ॥ १६ ॥ श्रीसांबसदाशिवार्पणमस्तु ॥ ॥ ॥

इदं पुस्तकं गुर्जरोपाव्हयमहादेवात्मजजनार्दनशर्मणा संपादितं सन्मुद्रणार्थं निर्णयसागराख्यमुद्रणयंत्रालयाधिपतये दत्तं तेन चैतत्पंडितद्वारा शोधयित्वा स्वकीये मुद्रणयंत्रे मुद्रयित्वा प्रसिद्धिं नीतम् ॥ शकाब्दाः १८०८.

## ॥ अथ कालभैरवाष्टकप्रारंभः ॥

॥ चामरं वृत्तम् ॥

श्रीगणेशाय नमः ॥ देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्रमिंदुशेखरं कृपाकरम् ॥ नारदादियोगिवृंदवंदितं दिगंबरं काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥ भानुकोटिभास्करं भवाब्धितारकं परं नीलकंठमीप्सितार्थदायकं त्रिलोचनम् ॥ कालकालमंबुजाक्षमक्षशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥ शूलटंकपाशदंडपाणिमादिकारणं श्यामकायमादिदेवमक्षरं निरामयम् ॥ भीमविक्रमं प्रभुं विचित्रतांडवप्रियंकाशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ॥ निक्कणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिकापुराधिनाथकालभैरवं भजे ॥ ४ ॥ धर्मसेतुपालकं त्वधर्ममार्गनाशकं कर्मपाशमोचकं सुशर्मदायकं विभुम् ॥ स्वर्णवर्णशेषपाशशोभितांगमंडलं काशिकापुराधिनाथकालभैरवं भजे ॥ ५ ॥ रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम् ॥ मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं काशिकापुराधिनाथकालभैरवं भजे ॥ ६ ॥ अट्टहासभिन्नपद्मजांडकोशसंततिं दृष्टिपात-

नष्टपापजालमुग्रशासनम् ॥ अष्टसिद्धिदायकं कपालमालिकंधरं काशिकापुराधिनाथका-
लभैरवं भजे ॥ ७ ॥ भूतसंघनायकं विशालकीर्तिदायकं काशिवासलोकपुण्यपापशोध-
कं विभुम् ॥ नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिकापुराधिनाथकालभैरवं भजे
॥ ८ ॥ कालभैरवाष्टकं पठंति ये मनोहरं ज्ञानमुक्तिसाधनं विचित्रपुण्यवर्धनम् ॥ शोक-
मोहदैन्यलोभकोपतापनाशनं ते प्रयांति कालभैरवांघ्रिसन्निधिं ध्रुवम् ॥ ९ ॥ इति श्रीम-
च्छंकराचार्यविरचितं कालभैरवाष्टकं संपूर्णम् ॥ श्रीकालभैरवार्पणमस्तु ॥ ॥ ॥

